६ अम्-अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ म ङ ण न।
७ अश्-अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ
म ङ ण न झ भ घ ढ ध ज ब ग ड द।
८ अल्-अ इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल ञ म ङ ण न
झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह।
९ इक्-इ उ ऋ ऌ।
१० इच्-इ उ ऋ ऌ ए ओ ऐ औ।
११ इण्-इ उ ऋ ऌ ए ओ ऐ औ ह य व र ल।
१२ उक्-उ ऋ ऌ।
१३ एङ्-ए ओ।
१४ एच्-ए ओ ऐ औ।
१५ ऐच्-ऐ औ।
१६ हश्-ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द।
१७ हल्-ह य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग
ड द ख फ छ ठ थ च ट त क प श ष स ह।
१८ यण्-य व र ल।
१९ यम्-य व र ल ञ म ङ ण न।
२० यञ्-य व र ल ञ म ङ ण न झ भ।
२१ यय्-य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब
ग ड द ख फ छ ठ थ च ट त क प।
२२ यर्-य व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग
ड द ख फ छ ठ थ च ट त क प श ष स।
२३ वश्-व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द।
२४ वल्-व र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड

द ख फ छ ठ थ च ट त क प श ष स ह ।

२५ रल्-र ल ञ म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह ।

२६ मय्-म ङ ण न झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प ।

२७ ङम्-ङ ण न ।

२८ झष्-झ भ घ ढ ध ।

२९ झश्-झ भ घ ढ ध ज ब ग ड द ।

३० झय्-झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प ।

३१ झर्-झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ।

३२ झल्-झ भ घ ढ ध ज ब ग ड द ख फ छ ठ थ च ट त क प श ष स ह ।

३३ भष्-भ घ ढ ध ।

३४ जश्-ज ब ग ड द ।

३५ बश्-ब ग ड द ।

३६ खय्-ख फ छ ठ थ च ट त क प ।

३७ खर्-ख फ छ ठ थ च ट त क प श ष स ।

३८ छव्-छ ठ थ च ट त ।

३९ चय्-च ट त क प ।

४० चर्-च ट त क प श ष स ।

४१ शर्-श ष स ।

४२ शल्-श ष स ह ।　　इति प्रत्याहाराः ।

१२ पृष्ठ २ पंक्ति १२ पृष्ठ पंक्ति ९ टिप्पणीभूतमिदम् । ७ ।

१ वर्णभेदज्ञापकचक्रमिदम् ।

| अक्षराणि | अ इ उ ऋ ऌ | अ इ उ ऋ ए ओ ऐ औ | अ इ उ ऋ ऌ ए ओ ऐ औ |
|---|---|---|---|
| भेदाः | ह्रस्वोदात्तानुनासिक.<br>ह्रस्वोदात्ताननुनासिक<br>ह्रस्वानुदात्तानुनासिक.<br>ह्रस्वानुदात्ताननुनासिकः<br>ह्रस्वस्वरितानुनासिकः<br>ह्रस्वस्वरिताननुनासिकः | दीर्घोदात्तानुनासिकः<br>दीर्घोदात्ताननुनासिक·<br>दीर्घानुदात्तानुनासिकः<br>दीर्घानुदात्ताननुनासिक.<br>दीर्घस्वरितानुनासिक·<br>दीर्घस्वरिताननुनासिकः | प्लुतोदात्तानुनासिकः<br>प्लुतोदात्ताननुनासिकः<br>प्लुतानुदात्तानुनासिकः<br>प्लुतानुदात्ताननुनासिकः<br>प्लुतस्वरितानुनासिकः<br>प्लुतस्वरिताननुनासिकः |

२ प्रयत्नज्ञापकचक्रमिदम् ।

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| बाह्याः | विवार श्वास अघोष अल्पप्राण | विवार श्वास अघोष महाप्राण | | संवार नाद घोष अल्पप्राण | उदात्त अनुदात्त स्वरित | | | संवार नाद घोष महाप्राण | |
| अक्षराणि | क च ट त प | ख छ ठ थ फ | श ष स | ग ङ ज ञ ड ण द न ब म | अ | इ ए उ ओ ऋ ऐ ऌ औ | य व र ल | घ झ ढ ध भ | ह |
| अभ्यन्तरप्रयत्नाः | स्पृष्ट | | ईषद्विवृत | स्पृष्ट | ह्रस्वस्तु संवृतः प्रयोगे | विवृत | ईषत्स्पृष्ट | स्पृष्ट | ईषद्विवृत |

श्रीः ।

श्रीदधिमथी जयति ।

# अथ लघुसिद्धान्तकौमुदी.



श्रीदधिमथी जयति ।

दधिर्भक्तजनान्धात्री मथी तदरिमाथिनी ।
देवी दधिमथी नाम धन्वदेशे विराजते ॥




यत्क्षत्रजाता जगतीतले जना गच्छन्त्यमी दाधिमथाख्यया प्रथाम् ।
देवैः स्तुता श्रीदधिमथ्यनारत सोपासकानां विजय सदा क्रियात् ॥

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम् ।
पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम् ॥ १ ॥

**अइउण् १ । ऋऌक् २ । एओङ् ३ । ऐऔच् ४ । हयवरट् ५ । लण् ६ । ञमङणनम् ७ । झभञ् ८ । घढधष् ९ । जबगडदश् १० । खफछठथचटतव् ११ । कपय् १२ । शषसर् १३ । हल् १४ ॥** इति माहेश्वराणि

---

नत्वा दधिमथीं देवीं शिवदत्तः समासतः ।
प्रार्थितः क्षेमराजेन टिप्पणीं कर्तुमुद्यतः ॥

१ विकाररहिताम् ॥ २ प्रशस्तगुणयुताम् ॥ ३ पाणिनीयस्य पाणिनिगोत्रजाह्निकमुनिप्रणीतव्याकरणस्य बालबुद्धौ प्रवेशाय 'महो देवो मर्त्यां आविवेश' इति महाभाष्यधृतश्रुतेः ॥ ४ अत्र संहिताया अविवक्षया न संहिताकार्यम् ॥ ५ अत्र हकारोपदेशस्तु अट्–अश्–हश्–इण्–ग्रहणेषु हकारस्य ग्रहणार्थः । तेन हकारव्यवधानेपि "अट्कुप्वाङ्नुम्व्यवायेऽपि" इत्यनेन 'अर्हाणाम्' इत्यादौ णत्वस्य हकारे परेऽपि "भो भगो–" इत्यनेन, अश्परकत्वनिमित्तकस्य 'हंसा हसन्ति' इत्यत्र रोर्यत्वस्य, "हशि च" इत्यनेन हश्निमित्तस्य रोः स्थान उत्वस्य, "विभाषेटः" इति इण्निमित्तकस्य 'लिलिहिढ्वे' इत्यत्र ढत्वविकल्पस्य सिद्धिः ॥ ६ अत्रापि णकारानुबन्धयोजनं 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति परिभाषाव्यञ्जनाय ॥ ७ अत्रापि पुनर्हकारः 'रुदिहि' इत्यत्र "रुदादिभ्यः सार्वधातुके"–इत्यनेन हकारस्य वल्त्वमाश्रित्य इडागमाय, "रलो व्युपधात्" इत्यनेन 'स्नेहित्वा' इत्यत्र हकारस्य रल्त्वमाश्रित्य क्त्वः कित्त्वविकल्पाय, "झलो झलि" इत्यनेन 'अदाग्धाम्' इत्यत्र हस्य झल्त्वमाश्रित्य सलोपाय, "शल इगुपधात्" इत्यनेन 'अधुक्षत्' इत्यत्र हस्य शल्त्वमाश्रित्य च्लेः क्सादेशायोपदिष्टः ॥ ८ महेश्वरादागतानि । तथा चोक्तं शिक्षायाम्–'येनाक्षरसमाम्नायमधि–

सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारादिष्वकार उच्चारणार्थः । लण्मध्ये त्वित्संज्ञकः ॥ **हलन्त्यम् १ । ३ । ३ ॥** उपदेशेऽन्त्यं हलित्स्यात् । उपदेश आद्योच्चारणम् । सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र ॥ **अदर्शनं लोपः १।१।६०॥** प्रसक्तस्यादर्शनं लोपसंज्ञं स्यात् । **तस्य लोपः १।३।९ ॥** तस्येतो लोपः स्यात् । अणादयोऽणाद्यर्थाः । **आदिरन्त्येन सहेता १।१।७१॥** अन्त्यनेता

---

गम्य महेश्वरात । कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ इति । अस्यां शिक्षायां प्रत्याहाराह्निकान्त्योपनिर्दिष्टाया 'सोयमक्षरसमाम्नायः–' इति श्रुतौ स्मृतौ वा समाम्नायपदेनात्र वेदत्व सूचितम् ॥ यद्वा–महेश्वरेण कृताः माहेश्वरा अनुबन्धाः, ते सन्ति यत्रेति "अर्श आदिभ्योच्" माहेश्वराणि महेश्वरोपयोजितानुबन्धभूतणकारादिचतुर्दशवर्णयुक्तानि–इति ॥ तथा चोक्त नन्दिकेश्वरकाशिकायाम्–'अत्र सर्वत्र सूत्रेषु अनुबन्धचतुर्दशम् । धात्वर्थं समुपादिष्टं पाणिन्यादीष्टसिद्धये' ॥ इति ॥ १ अणादिसंज्ञास्तु पृष्ठे ४–६ षु दर्शिताः ॥ २ चतुर्दशसूत्राणामित्यर्थः ॥ ३ ण–क–ङ–चादयश्चतुर्दश ॥ ४ 'हयवरट्' इत्यादिसूत्रस्थेषु ॥ ५ अत एव कैयटसंमतप्रत्याहारसिद्धिः ॥ ६ "उपदेशेजनुनासिक इत्" इति सूत्राद् 'उपदेशे' 'इत्' इत्यनुवर्तते ॥ ७ आद्यमज्ञातस्वरूपज्ञापकमुच्चारणं यत्र तद् अक्षरसमाम्नाय–धातु–प्रातिपदिकप्रत्ययनिपातागमादेशरूपं व्यवसितपदार्थत्वेन भाष्योक्तमेव ग्राह्यम् ॥ ८ "हलन्त्यम्" इति सूत्रे उपदेशपदेत्पदयोरभावेन कथमुक्तार्थसिद्धिरत आह–सूत्रेष्विति ॥ इयं रीतिर्यत्र श्रूयमाणपदैरेवेष्टार्थसिद्धिर्न भवेत् तत्र सर्वत्र ज्ञेया ॥ ९ "स्थानेऽन्तरतमः" इति सूत्रात् 'स्थाने' पदमनुवर्तते इति भाव्यमानस्येत्यर्थः ॥

सहित आदिमध्यगानां स्वस्य च संज्ञा स्यात् । यथाऽणिति अइउवर्णानां संज्ञा । एव[1]मच्हल्अलित्यादयः ॥ **ऊ[2]कालोऽज्ह्रस्वदीर्घप्लुतः १।२।२७॥** उश्च ऊश्च ऊ३श्च वः । वां काल इव कालो यस्य सोऽच् क्रमाद् ह्रस्वदीर्घप्लुतसंज्ञः स्यात् । स प्रत्येकमुदात्तादिभेदेन त्रिधा[3] । **उ[4]च्चैरुदात्तः १।२।२९॥ नी[5]चैरनुदात्तः १।२।३०॥ स[6]माहारः स्वरितः १।२।३१॥** स न[7]वविधोऽपि प्रत्येकमनुनासिकत्वाननुनासिकत्वाभ्यां द्विधा ॥ **मुखनासिकावचनोऽनुनासिकः १।१।८॥** मुखसहितनासिकयोच्चार्यमाणो वर्णोऽनुनासिकसंज्ञः स्यात् । तदित्थम्[8]-अ इ उ ऋ एषां वर्णानां प्रत्येकमष्टा[9]दश भेदाः । ऌ[10]वर्णस्य द्वादश तस्य दीर्घाभावात् । एचामपि द्वादश तेषां ह्रस्वाभावात् ॥

---

१ ४–६ पृष्ठप्रदर्शितप्रत्याहारेषु प्रदर्शितम् ॥ २ कुक्कुटरुते उकार एवैकमात्रद्विमात्रत्रिमात्रत्वस्य स्पष्टतयाऽभिव्यक्तिरतोऽकारादयो नोक्ताः ॥ ३ वर्णभेदज्ञापकचक्रे ७, ८ पृष्ठयो द्रष्टव्यम् ॥ ४ सभागेषु स्थानेषूर्ध्वभागनिष्पन्नोऽजुदात्तसंज्ञः ॥ ५ सभागेषु स्थानेष्वधोभागनिष्पन्नोऽजनुदात्तसंज्ञः ॥ ६ उदात्तत्वानुदात्तत्वे वर्णधर्मौ समाह्रियेते यस्मिन् सोऽच् स्वरितसंज्ञः ॥ ७ वर्णभेदज्ञापकचक्र ७ पृष्ठे द्रष्टव्यम् । तत्रानुनासिकाननुनासिकपदयोगो हेयः ॥ ८ "ऊकालोऽज्" इत्यादिभिः सूत्रैः कृतानां संज्ञानां समावेशेन यज्जातम्, तद् इत्थं पर्यवसितम् ॥ ९ वर्णभेदज्ञापकचक्रं ७ पृष्ठे द्रष्टव्यम् । ऌवर्णस्य एचां च द्वादशभेदज्ञानमपि तत्रैव द्रष्टव्यम् ॥ १० विवृतप्रयत्नस्येति बोध्यम् ॥ ईषत्स्पृष्टप्रयत्नवत ऌवर्णस्य तु दीर्घत्वमप्यस्ति ॥

**तुल्यास्यप्रयत्नं सवर्णम्** १।१।९॥ ताल्वादिस्थानमाभ्यन्तर-प्रयत्नश्चेत्येतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् । ( ऋलृवर्ण-योर्मिथः सावर्ण्यं वाच्यम् ) अकुहविसर्जनीयानां कण्ठः । इचुयशानां तालु । ऋटुरषाणां मूर्धा । लृतुलसानां दन्ताः । उपूपध्मानीयाना-मोष्ठौ । ञमङणनानां नासिका च । एदैतोः कण्ठतालु । ओदौतोः कण्ठोष्ठम् । वकारस्य दन्तोष्ठम् । जिह्वामूलीयस्य जिह्वामूलम् । नासिकाऽनुस्वारस्य ॥ यत्नो द्विधा । आभ्यन्तरो बाह्यश्च । आद्यः पञ्चधा । स्पृष्टेषत्स्पृष्टेषद्विवृतविवृतसंवृतभेदात् । तत्र स्पृष्टं प्रयतनं स्पर्शा-नाम् । ईषत्स्पृष्टमन्तःस्थानाम् । ईषद्विवृतमूष्मणाम् । विवृतं स्वराणाम् । ह्रस्वस्यावर्णस्य प्रयोगे संवृतम् । प्रक्रिया दशायां तु विवृतमेव । बाह्य-

---

१ 'आस्ये भवानि स्थानानि॥आस्येषु प्रयत्न आस्यप्रयत्नः स्थानान्तर्गतप्रयत्नः। तुल्य आस्यप्रयत्नो यस्य वर्णकदम्बकस्य तत्' इत्येवभाष्यसूचितसमासफलितमर्थ-माह–**ताल्वादिस्थानमिति** ॥ तालुन आदिः ताल्वादिः कण्ठः, तालुआदिर्येषां ते ताल्वादयः । ताल्वादिश्च ताल्वादयश्च ताल्वादयः । एवं च कण्ठस्यापि ग्रहणं सिद्धम् ॥ २ स्थानभेदेनाप्राप्तं सावर्ण्यं विधीयते । अनित्यं चेदम् "ऋलृक्" इत्यत्र लृकारोपदेशसामर्थ्यात् ॥ ३ कु–चु–टु–तु–पु–पदेन कवर्ग–चवर्ग–टवर्ग–तवर्ग–पवर्गस्थाः पञ्च पञ्च वर्णा ग्राह्याः ॥ ४ दन्तानिजादिक्को देशः । तेन भग्नदन्तस्याप्युच्चारणं भवत्येव ॥ ५ अत्र चकारेण स्वस्ववर्गस्थानकण्ठादिसंग्रहः । अत एव 'अङ्कितः' इत्यादौ परककारसवर्णङकारसिद्धिः ॥ ६ वकारदन्त्यत्वं कैयटानुरोधेन। भाष्यकारस्तु 'उवोपोपध्मा ओष्ठे' इति कात्यायनप्रातिशाख्योक्तमो-ष्ठ्यत्वमेव मन्यते । दन्तसन्निकृष्टाचोष्ठौ स्थाने इत्यभिप्रायेण 'दन्त्योष्ठ्यो वः' इति शिक्षा ॥ ७ भाष्यप्रदर्शितयोगविभागानुसारेणेदम् ॥

प्रयत्नस्त्वेकादशधा । विवारः संवारः श्वासो नादो घोषोऽघोषोऽल्पप्राणो महाप्राण उदात्तोऽनुदात्तः स्वरितश्चेति । खरो विवाराः श्वासा अघोषाश्च । हशः[1] संवारा नादा घोषाश्च । वर्गाणां प्रथमतृतीयपञ्चमा यणश्चाल्प-प्राणाः[2] । वर्गाणां द्वितीयचतुर्थौ शलश्च महाप्राणाः । कादयो मावसानाः स्पर्शाः । यणोऽन्तःस्थाः । शल ऊष्माणः । अचः स्वराः । ≍ क ≍ ख इति कखाभ्यां प्रागर्धविसर्गसदृशो जिह्वामूलीयः । ≍ प ≍ फ इति पफाभ्यां प्रागर्धविसर्गसदृश उपध्मानीयः । अं अः इत्यचः परावनु-स्वारविसर्गौ ॥ **अणुदित्सवर्णस्य चाप्रत्ययः १।१।६९ ॥** प्रतीयते विधीयत इति प्रत्ययः । [3]अविधीयमानोऽणुदिच्च सवर्णस्य संज्ञा-स्यात् । अत्रैवाण् परेण[4] णकारेण । कु चु टु तु पु एते उदितः । तदेवम्-अ इत्यष्टादशानां संज्ञा । तथेकारोकारौ । ऋकारस्त्रिंशतः । एवं ऌका-रोऽपि । एचो द्वादशानाम् । अनुनासिकाननुनासिकभेदेन यवला द्विधा । तेनाननुनासिकास्ते द्वयोर्द्वयोस्संज्ञा ॥ **परः संनिकर्षः संहिता १।४।१०९॥** [5]वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात् ॥ **हलो-ऽनन्तराः संयोगः १।१।७ ॥** [6]अज्भिरव्यवहिता हलः संयोगसंज्ञाः

१ 'अशः' इत्येवोचितम् । तेनाचामपि संवारनादघोषप्रयत्नसिद्धि. ॥ २ अत्र चकारेण स्वराणामपि संग्रहः । तेन स्वराणामल्पप्राणप्रयत्नसिद्धिः ॥ ३ अवि-धीयमान इति 'अण्' इत्यस्यैव विशेषणम् न तु 'उदित्' इत्यस्य " चजोःकु घिण्ण्यतोः " इत्यादौ विधेये उदित्करणात् ॥ ४ " परेणैवेण्ग्रहाः सर्वे पूर्वे-णैवाण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥१॥" ५ वर्णात्मके शब्दे संनिधिर्वर्णानामेव संभवतीति भावः ॥ ६ व्यवधानं विजातीयैरेव संभवतीति भावः ॥

स्यु:॥सुप्तिङन्तं पदम् १।४।१४॥ सुबन्तं तिङन्त च पदसंज्ञं स्यात्॥

इति संज्ञाप्रकरणम् ।

इको यणचि ६।१।७७॥ इक: स्थाने यण् स्यादचि सहितायां विषये ॥ सुधी उपास्य इति स्थिते ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य १।१।६६॥ सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाव्यवहितस्य पूर्वस्य बोध्यम् ॥ स्थानेन्तरतमः १।१।५० प्रसंगे सति सदृशतम आदेशः स्यात् । सुध्य् उपास्य इति जाते ॥ अनचि च ८।४।४७ ॥ अचः परस्य यरो द्वे वा स्तो

१ 'द्वन्द्वान्ते श्रूयमाण पदं प्रत्येकमभिसबध्यते' इति न्यायेन प्रत्येकमन्तपद संबध्यत इत्याह–'सुबन्तम्' इति 'प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्' इति परिभाषयैवान्तग्रहणे लब्धे अन्तग्रहण 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहण नास्ति' इति परिभाषां ज्ञापयतीति बोध्यम् ॥ २ 'शब्दस्य शब्देन कोऽन्योभिसबन्धो भवितुमर्हति अन्यदत स्थानात्' इति भाष्योक्तयुक्तेः षष्ठयाः स्थानार्थकत्वमभिप्रेतमाह–इक स्थान इति । 'सहितायाम्' इति सूत्रमनुवर्तते इति बोध्यम् ॥ ३ पूर्वस्य 'सप्तमीनिर्दिष्टार्थापेक्षया' इति योज्यम् ॥ ४ 'दर्भाणां स्थाने शरैः प्रस्तारितव्यम्' इत्यत्रेव स्थानशब्दस्य प्रसंगार्थकत्वमिति भावः ॥ "षष्ठी स्थानेयोगा" इत्यतः स्थानेग्रहणेनुवर्तमाने पुनरत्र स्थानेग्रहणम् "यत्रानेकविधमान्तर्य्यं तत्र स्थानत आन्तर्य्यं बलीयः" इति परिभाषां ज्ञापयति ॥ तेन जेता जोतेत्यादौ मात्रिकस्य मात्रिकोऽकारो गुणोनेति बोध्यम् ॥ ५ "अचो रहाभ्यां द्वे" "यरोऽनुनासिकेऽनुनासिको वा" इत्यतः अचः, द्वे, यरः, वा, इति वर्तन्ते । तत्र 'अचः' इत्यस्य पञ्चमीत्वेन तस्मादित्युत्तरस्य, इति परिभाषाबलेन 'परस्य' इति चोपतिष्ठते इति भावः ॥

ने त्वचि । इति धकारस्य द्वित्वेन सुध्ध्य् उपास्य इति जाते ॥ **झलां जश् झशि ८।४।५३॥** स्पष्टम् । इति पूर्वधकारस्य दकारः ॥ **संयोगान्तस्य लोपः ८।२।२३॥** संयोगान्तं यत्पदं तदन्त्यस्य लोपः स्यात् ॥ **अलोऽन्त्यस्य १।१।५२॥** षष्ठीनिर्दिष्टोऽन्त्यस्याल आदेशः स्यात् । इति यलोपे प्राप्ते-( यणः प्रतिषेधो वाच्यः ) । सुद्ध्युपास्यः । मद्ध्वरिः । धात्त्रंशः । लाकृतिः ॥ **एचोऽयवायावः ६।१।७८॥** एचः क्रमादय् अव् आय् आव् एते स्युरचि ॥ **यथासंख्यमनुदेशः समानाम् १।३।१० ॥** समसम्बन्धी विधिर्यथासंख्यं स्यात् । हरये । विष्णवे । नायकः । पावकः ॥ **वान्तो यि प्रत्यये ६।१।७९ ॥** यकारादौ प्रत्यये

---

१ 'अनचि' इत्यस्य पर्युदासत्वे हलि परत एव द्वित्वं स्यात्, न त्वभीष्टेऽवसाने 'वाक्क्' 'वाग्ग्' इत्यादौ द्वित्वमित्यतः प्रसज्यप्रतिषेधत्वमाश्रित्याह—न त्वचीति ॥ एतेन 'लाघवाद् ' हलि ' इत्येव कुतो नोक्तम्' इति शङ्कापि निरस्ता ॥ २ स्थानत आन्तर्यादिति भावः ॥ ३ ' पदस्य ' इत्यधिक्रियत इति भावः ॥ ४ ' तदन्त्यस्य ' इत्यर्थलाभः कथमत आह—अलोन्त्यस्येति ॥ " षष्ठी स्थाने योगा " इति सूत्रमनुवर्ततेऽत आह—षष्ठीनिर्दिष्टेति ॥ ५ संयोगान्तलोपे संयोगादिलोपे च कार्ये यणन्तसंयोगान्तपदस्य प्रतिषेध इति वार्तिकार्थः । तेन काक्यर्थम्, वास्यर्थम्,—इत्यादौ संयोगादिलोपेऽपि यणन्तसंयोगस्य ग्रहणाभावे संयोगादिलोपो नेति बोध्यम् ॥ ६ " इको यणचि " इत्यतोऽचीति वर्तते ॥ ७ ' क्रमात् ' इत्यर्थलाभसाधकपरिभाषामाह—यथासंख्यमिति ॥ ८ ' येन विधिस्तदन्तस्य ' इत्यपवादभूतया ' यस्मिन्विधिस्तदादावल्ग्रहणे ' इति वाचनिक्या परिभाषया तदादिविधिः । ' ओदौतोरेव स्थानित्वस्य वान्तादेशे निर्णीतत्वम् ' इति चाभिप्रेत्याह—यकारादावित्यादि ॥

परे ओदौतोरव् आव् एतौ स्तः। गव्यम् । नाव्यम् । (अध्वपरिमाणे च)। गव्यूतिः ॥ **अदेङ् गुणः १।१।२॥** अत् एङ् च गुणसंज्ञः स्यात् ॥ **तपरस्तत्कालस्य १।१।७०॥** तः परो यस्मात्स च तात्परश्चो-च्चार्यमाणसमकालस्यैव संज्ञा स्यात् ॥ **आद्गुणः ७।१।८७ ॥** अव-र्णादचि परे पूर्वपरयोरेको गुण आदेशः स्यात् । उपेन्द्रः । गङ्गो-दकम् ॥ **उपदेशेऽजनुनासिक इत् १ । ३ । २ ॥** उपदेशेऽनु-नासिकोऽजित्सञ्ज्ञः स्यात् । प्रतिज्ञानुनासिक्याः पाणिनीयाः । लण्सूत्रस्थावर्णेन सहोच्चार्यमाणो रेफो रलयोः सञ्ज्ञा ॥ **उरण् रपरः १।१।५१॥** ऋ इति त्रिंशतः संज्ञेत्युक्तम् । तत्स्थाने योऽण् स रपरः सन्नेव प्रवर्तते । कृष्णर्द्धिः । तवल्कारः ॥ **लोपः शाकल्यस्य ८।३।१९॥** अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोपो वाऽशि परे। **पूर्वत्रा-**

---

१ ' गोर्यूतौ वान्त ' इति वर्तते ॥ २ " गव्यूतिः स्त्री क्रोशयुगम् " इत्यमरः ॥ ३ अकारेण दीर्घप्लुतयोः, एङा त्रिमात्रचतुर्मात्रग्रहणवारणाय तपरपदे बहुव्रीहिपञ्चमीतत्पुरुषसमासावाश्रित्य व्याचष्टे—**तः परो यस्मात्** इत्यादि ॥ ४ " इको यणचि " इत्यतः ' अचि ' इति " एकः पूर्वपरयोः " इत्यधिकारसूत्रं चाश्रित्याह—**अचि पर** इत्यादि ॥ ५ एतदर्थमेव ' लण्मध्ये त्वित्सञ्ज्ञकः ' इत्युक्तं प्राक् ॥ नव्यास्तु ' ऌकारस्य लपरः ' इत्यपूर्वमेव वचनं कर्तव्यम् इति वदन्ति ॥ ६ " भोभगोअघोअपूर्वस्य " इत्यत ओकारान्तानामनुवृत्तेः " ओतो गार्ग्यस्य " इत्यनेन वैयर्थ्यसूचनात् केवलम् ' अपूर्वस्य ' इत्येवानुवर्तते ' अशि ' इति च " पदस्य " " व्योर्लघु "—इत्यतः ' व्योः ' इति च ॥

**सिद्धम् ८।२।१ ॥** सपादसप्ताध्यायीं प्रति त्रिपाद्यसिद्धा, त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धम्। हर इह, हरयिह। विष्ण इह, विष्णविह ॥ **वृद्धिरादैच् १।१।१ ॥** आदैच्च वृद्धिसंज्ञः स्यात् ॥ **वृद्धिरेचि ६।१।८८ ॥** आदेचि परे वृद्धिरेकादेशः स्यात्। गुणापवादः। कृष्णैकत्वम्। गङ्गौघः। देवैश्वर्यम्। कृष्णौत्कण्ठ्यम् )॥ **एत्येधत्यूठ्सु ६।१।८९॥** अवर्णादेजाद्योरेत्येधत्योरूठि च परे वृद्धिरेकादेशः स्यात्। उपैति। *उपैधते। प्रष्ठौहः। एजाद्योः किम्। उपेतः। मा भवान्प्रेदिधत्। ( अक्षादूहिन्यामुपसंख्यानम् ) अक्षौहिणी सेना। ( प्रादूहोढोढ्येषैष्येषु ) प्रौहः। प्रौढः। प्रौढिः। प्रैषः। प्रैष्यः।

---

१ अधिकारत्वफलमाह—त्रिपाद्यामपीति॥ प्रतिसूत्रमस्यैकवाक्यतया सयोगान्तं यत्पदं तदन्त्यस्य लोपः स्यात्। 'पूर्वस्मिन्कर्तव्ये तु जातोप्ययमसिद्धः' इत्येवं त्रिपादीस्थानां सर्वेषां विधीनामर्थः कल्पनीयः। तेन विद्वानित्यादौ सलोपादेरसिद्धत्वान्नलोपो नेति भावः ॥ २ तपरसूत्रेण नियमनात् द्विमात्र्योरेव ग्रहणमिति भाव. ॥ ३ "आद्गुणः" इति सूत्रत 'आद्' इति, 'एकः पूर्वपरयोः' इति च वर्तते ॥ ४ 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' इति न्यायेन गुणकर्तृकावश्यप्राप्तौ "वृद्धिरेचि" इति वृद्धिः आरभ्यतेऽतो वृद्धिर्गुणस्यापवादभूतेवेति भावः ॥ ५ 'आद्' 'वृद्धिरेचि' 'एक. पूर्वपरयोः' इति वर्तते ॥ ६ 'येननाप्राप्त' न्यायेन "एङि पररूपम्" "आद्गुणः" इत्यस्यापवादोयमिति भावः॥ * 'इक्श्तिपौ धातुनिर्देशे इति श्तिपो निर्देशेनात्र 'इण् गतौ' 'एध वृद्धौ' इति धात्वोरेव ग्रहणमिति बोध्यम् ॥ ७ अक्षाणामूहिनीति विग्रह एतत् ॥ अक्षाणामूहो स्यामस्तीति विग्रहे तु अक्षोहिणीत्येव तत्रार्थवत ऊहिनीशब्दस्याभावात् ॥ ८ ऊढवदिति क्तवत्वन्तैकदेशभूत ऊढशब्दे तु न वृद्धिः। तत्रोढशब्दस्यानर्थकत्वादिति बोध्यम् ॥

( ऋते च तृतीयासमासे ) सुखेन ऋतः सुखार्तः । तृतीयेति किम् । परमर्तः[1] ( प्रवत्सतरकम्बलवसनार्णदशानामृणे ) । प्रार्णम् । वत्सतरार्णम् इत्यादि ॥ **उपसर्गाः क्रियायोगे १।४।५९॥** प्रादयः[2] क्रियायोगे उपसर्गसंज्ञाः स्युः । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत् अभि प्रति परि उप-एते प्रादयः ॥ **भूवादयो धातवः १।३।१॥** क्रियावाचिनो[3] भ्वादयो धातुसंज्ञाः स्युः ॥ **उपसर्गादृति धातौ ६।१।९१॥** अवर्णान्तादुपसर्गादृकारादौ धातौ परे वृद्धिरेकादेशः स्यात्[4]। प्रार्छति ॥ **एङि पररूपम् ६।१।९४॥** आदुपसर्गादेङादौ[5] धातौ पररूपमेकादेशः स्यात् । प्रेजते । उपोषति ॥ **अचोऽन्त्यादि टि १।१।६४॥** अचां मध्ये योऽन्त्यः स आदिर्यस्य तट्टिसंज्ञं स्यात् । ( शकन्ध्वादिषु पररूपं वाच्यम् ) । तच्च टेः । शकन्धुः । कर्कन्धुः । मनीषा । आकृतिगणोऽयम् । मार्त्तण्डः ॥ **ओमाङोश्च ६।१।९५॥**

---

१ परमश्चासावृतश्चेति कर्मधारयोऽयमिति भावः ॥ २ "प्रादयः" इति सूत्रमनुवर्त्याह–प्रादय इति ॥ ३ भुवं भाव वदन्ति ते भूवादयः भूरादिर्येषां ते भूवादयः भूवादयश्च भूवादयश्चेत्येकशेष इत्यभिप्रेत्याह–क्रियावाचिन इति ॥ ४ "आद्गुणः" इति सूत्राद् 'आत्' इति "वृद्धिरेचि" इत्यतो वृद्धिरिति चानुवर्त्याह–अवर्णान्तादिति ॥ ५ "आद्गुण." इत्यत आदिति । "उपसर्गादृति" इत्यत उपसर्गादिति धाताविति चानुवर्त्य "येन विधिस्तदन्तस्य" । 'यस्मिन्विधिस्तदादावल्ग्रहणे' । इति क्रमेण तदन्ततदादिविधी इत्यत्र आह–एङादौ धाताविति ॥

ओमि आङि चात् परे पररूपमेकादेशः स्यात् । शिवायोन्नमः । शिव एहि ॥ **अन्तादिवच्च ६।१।८५॥** योऽयमेकादेशः स पूर्वस्यान्तवत्परस्यादिवत् । शिवेहि ॥ **अकः सवर्णे दीर्घः ६।१।१०१ ॥** अकः सवर्णेऽचि परे पूर्वपरयोर्दीर्घ एकादेशः स्यात् । दैत्यारिः । श्रीशः । विष्णूदयः होतॄकारः ॥ **एङः पदान्तादति ६।१।१०९ ॥** पदान्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात् । हरेऽत्र । विष्णोऽव ॥ **सर्वत्र विभाषा गोः ६।१।१२२ ॥**

---

१ "आद् गुणः" इत्यत 'आद्' इति "एङि पररूपम्" इत्यतः 'पररूपम्' इत्यनुवर्तते इत्याह–आदित्यादि ॥ २ "वृद्धिरेचि" इत्यस्य "एत्येधत्यूठ्सु" इत्यस्य चापवादः । ३ 'शिव + आ + इहि' इत्यवस्थायाम् 'शिव + आ' इत्यत्र "अकः सवर्णे" इति दीर्घे प्राप्ते 'आ + इहि' इत्यत्र "आद्गुणः" इति गुणे प्राप्ते धातूपसर्गकार्यत्वेन गुणस्यान्तरङ्गत्वात्, दीर्घस्य बहिरङ्गत्वात् पूर्वं गुणे जाते इति भावः ॥ ४ "एकः पूर्वपरयोः" इत्यनुवर्तते तथा च–एकादेशः पूर्वस्यान्तवदेव परस्यादिवदेव वा स्यात्–इत्यर्थफलितमाह–योयमित्यादि ॥ एवं च 'उभयत आश्रयणे नान्तादिवत्' इति फलितम् इति बोध्यम् । किं च, विशिष्टधर्मस्यैव तत्तद्धातुत्वप्रातिपदिकत्वनिपातत्वोपसर्गत्वादिरूपस्यैवातिदेश इति च बोध्यम् ॥ एवं चात्राङ्त्वस्यातिदेशात्पररूपं भवत्येव ॥ ५ "इको यणचि" इत्यतः 'अचि' इति, "एकः पूर्वपरयोः" इति सूत्रं चानुवर्ततेऽत आह–अचि परे इत्यादि ॥ ६ "अमि पूर्वः" इत्यत 'पूर्व' इति, "एङि पररूपम्" इत्यतो रूपमिति चानुवर्ततेऽत आह–पूर्वरूपमिति ॥

लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः पदान्ते। गोअग्रम्, गोऽग्रम्। एङन्तस्य किम्। चित्रग्वग्रम्। पदान्ते किम्। गोः॥ **अनेकाल् शित्सर्वस्य १।१।५५॥** इति प्राप्ते॥**ङिच्च १।१।५३॥** ङिदनेकालप्यन्त्यस्यैव स्यात्॥ **अवङ् स्फोटायनस्य ६।१।१२३॥** पदान्ते एङन्तस्य गोरवङ् वाऽचि। गवाग्रम्, गोऽग्रम्। पदान्ते किम्। गवि॥ **इन्द्रे च ६।१।१२४॥** गोरवङ् स्यादिन्द्रे। गवेन्द्रः॥ **दूराद्धूते च ८।२।८४॥** दूरात्सम्बोधने वाक्यस्य टेः प्लुतो वा॥ **प्लुतप्रगृह्या अचि नित्यम् ६।१।१२५॥** एतेऽचि प्रकृत्या स्युः। आगच्छ कृष्ण ३ अत्र गौश्चरति॥ **ईदूदेद्द्विवचनं**

---

१ "एङ पदान्तादति" इति "प्रकृत्यान्तःपादम्–" इति सूत्रात् 'प्रकृत्या' इति चानुवर्ततेऽत आह–एङन्तस्येत्यादि॥ २ 'एकदेशविकृतमनन्यवत्' इति न्यायेन विकृते 'गु' इति शब्दे गोत्वस्यागमनेऽपि 'विकृतावयवनिबन्धनकार्ये नाय न्यायः' इति गु शब्दे नैवागच्छति एङन्तत्वमिति भावः॥ ३ "अलोन्त्यस्य" "आदेः परस्य" इत्यनयोः जरसौ रामैरित्यादावपवादोयम्॥ ४ आरम्भसामर्थ्यादाह–अनेकालिति॥तातङि तु ङित्करणादेव सर्वस्य भवति॥ ५ "एङ पदान्तात्" इति 'गोः' इति चानुवर्त्तते 'अति' इति नानुवर्ततेऽस्वरितत्वात्॥ ६ आरम्भसामर्थ्यान्नायं वैकल्पिक इति॥ ७ "वाक्यस्य टेः प्लुत उदात्तः" इत्यधिक्रियते॥ 'सर्वः प्लुतः साहसमनिच्छता विकल्प्यः कर्तव्यः' इति भाष्यम्॥ ८ 'नित्यप्रहसितः नित्यप्रजल्पित' इत्यादाविव नित्यपदं प्रायःसमानार्थकम्। अत एव 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यादौ नित्यकर्मणि भोजनशौचादेः कदाचित् त्याग इव प्रकृतिभावप्रवृत्तेरपि त्यागेन न प्रकृतिभावः॥ ९ "प्रकृत्याऽन्तःपादम्–" इत्यतः 'प्रकृत्या' इति वर्तते॥

**प्रगृह्यम् १।१।११॥** ईदूदेदन्तं[1] द्विवचनं प्रगृह्यं स्यात् । हरी[2] एतौ । विष्णू इमौ । गङ्गे अमू ॥ **अदसो मात् १।१।१२॥** अस्मात्परावीदूतौ[3] प्रगृह्यौ स्तः । अमी[4] ईशाः । रामकृष्णावमू आसाते । मात्किम् । अमुकेऽत्र[5] ॥ **चादयोऽसत्त्वे १।४।५७ ॥** अद्रव्यार्थाश्चादयो निपाताः[6] स्युः ॥ **प्रादयः १।४।५८॥** एतेऽपि[7] तथा ॥ **निपात एकाजनाङ् १।१।१४॥** एकोऽज्[8] निपात आङ्वर्जः प्रगृह्यः स्यात् । इ इन्द्रः । उ उमेशः । 'वाक्यस्मरणयोरङित्'[9] । आ एवं नु मन्यसे । आ एवं किल तत् । अन्यत्र ङित् । आ ईपदुष्णम् ओष्णम् ॥ **ओत् १।१।१५॥** ओदन्तो[10] निपातः प्रगृह्यः स्यात् ।

---

१ पचेते इत्यादौ प्रगृह्यत्वसिद्धये 'येन विधिस्तदन्तस्य' इति प्रवर्त्त्याह–ईदूदेदन्तमिति ॥ २ 'आद्यन्तवदेकस्मिन्' इति सूत्र मनसि निधायोदाहरति–हरी इत्यादि ॥ ३ 'ईदूदेत्' इत्यस्यानुवृत्तावपि अदस्शब्दसबन्धिमकारात्परस्यैकारस्यासभवादाह–ईदूताविति ॥ ४ 'द्विवचनम्' इति तु नानुवर्तते इति बोधयितुं बहुवचनमुदाहरति–अमी इति ॥ ५ असति माद्ग्रहणे एकारोऽप्यनुवर्त्तेत । माद्ग्रहणे कृते तु मकाराद्व्यवहितपरस्यैकारस्यासंभव इति भावः ॥ ६ "प्राग्रीश्वरात्" इत्यतो 'निपाता.' इत्यनुवर्तते इत्यभिप्रेत्याह–निपाता इति ॥ लिङ्गसंख्यानन्वयित्वमसत्त्ववत्त्वम् ॥ ७ "चादयोऽसत्त्वे" इत्यतोऽसत्त्व इति, 'निपाताः' इति चानुवर्त्याह–एतेऽपीति ॥ ८ 'प्रगृह्यम्' इत्यनुवर्तते, 'एकाच्' इति च कर्मधारयः, इत्यभिप्रेत्याह-एकोऽजिति ॥ ९ 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ॥ एतमातं ङित विद्यात्' इत्यादिशेषः ॥ १० 'प्रगृह्यम्' इति, 'निपातः' इति च वर्तते । 'येन विधिस्तदन्तस्य इत्युपतिष्ठते', इत्याह–ओदन्त इति ॥ अहो इति चाखण्डनिपात इति भावः ॥

अहो ईशाः ॥ **सम्बुद्धौ शाकल्यस्येतावनार्षे १।१।१६ ॥** संम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिके इतौ परे । विष्णो इति, विष्ण इति, विष्णविति ॥ **मय उञो वो वा ८।३।३३ ॥** मयः परस्य उञो वा वा अचि । किम्वुक्तम्, किमु उक्तम् ॥ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च ६।१।१२७ ॥** पदान्ता इको ह्रस्वा वास्युरसवर्णेऽचि । ह्रस्वविधिसामर्थ्यान्न स्वरसंधिः । चक्रि अत्र, चक्र्यत्र । पदान्ता इति किम् । गौर्यौ--**अचो रहाभ्यां द्वे ८।४।४६ ॥** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः । गौर्य्यौ । ( न समासे )

---

१ 'ओत्' इति 'प्रगृह्यम्' इति चानुवर्तते । ऋषिशब्दो वेदवाचीत्यभिप्रेत्याह--संबुद्धिनिमित्तक इति ॥ २ शाकल्यो दृष्टपूर्वस्य लोपस्य स्मर्ता न त्वन्यत्रादृष्टपूर्वस्य लोपस्य विधायक इत्यभिप्रेत्य लोपघटितमुदाहरति--विष्ण इतीति ॥ प्रगृह्यत्वलोपविधायकत्वे तु शाकल्यमते प्रकृतिभावस्यैव जातत्वेनावादेशाप्राप्त्या लोपस्यासंभाव्यत्वात् तृतीयप्रयोगस्य लोपघटितस्य न कदापि संभव इति भावः ॥ ३ "ङमो ह्रस्वात्" इत्यतोऽचीति वर्ततेऽत आह--अचीति ॥ "इको यणचि" इत्युत्तरं "मय उञो वो वा" इति सूत्रकरणेनापि प्रकृतिभाववारणसिद्धौ त्रैपादिकप्रकरणे सूत्रान्तरनिर्माणफलं वत्वस्यासिद्धत्वाद्गुरुत्वाराभाव एवेति सूचयन्नुदाहरति--किम्वुक्तमिति ॥ ४ "एङः पदान्तात्-" इत्यत 'पदान्तात्' विभक्तिविपरिणतम्, "प्लुतप्रगृह्या" इत्यतः 'अचि' इति वर्ततेऽत आह--अचीति ॥ ह्रस्वोत्तरमपि यदि यण् स्यात् तर्हि ह्रस्वविधानमेव व्यर्थं स्यादित्याह--ह्रस्वविधीति ॥ ५ "यरोऽनुनासिकेऽनुनासिको वा" इत्यतः 'यरः' इति 'वा' इति च वर्ततेऽत आह--यर इति ॥ ६ "इकोऽसवर्णे शाकल्यस्य ह्रस्व." इति वर्तते

द्याप्यश्च: ॥ **ऋत्यकः ६।१।१२८ ॥** ऋति परे पदान्ता अकः प्राग्वद्वा । ब्रह्म ऋषिः, ब्रह्मर्षिः । पदान्ताः किम् । आर्च्छत् ॥

इत्यच्सन्धिः ।

**स्तोः श्चुना श्चुः ८।४।४० ॥** सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामश्शेते । रामश्चिनोति । सच्चित् । शार्ङ्गिञ्जय ॥ **शात् ८।४।४४॥** शात्परस्य तवर्गस्य चुत्वं न स्यात् । विश्नः । प्रश्नः ॥ **ष्टुना ष्टुः ८।४।४१॥** स्तो ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे ॥ **न पदान्ताट्टोरनाम् ८।४।४२ ॥** पदान्ताट्टवर्गात्परस्याऽनामः स्तोः ष्टुर्न स्यात् । षट् सन्तः । षट् ते । पदान्तात्किम् । ईट्टे । टोः

१ "एङः पदान्तात्-" इत्यतः 'पदान्तात्' इति 'इकोऽसवर्णे-' इत्यतः 'शाकल्यस्य ह्रस्वः' इति च वर्तते तदाह-**प्राग्वदिति** ॥ २ "आडजादीनाम्" इति जातस्याडागमस्य धात्ववयवत्वेन पदान्तत्वाभाव इतिभावः ॥ ३ अत्र स्थान्यादेशयोरेव यथासंख्यम् न निमित्तकार्यिणोः, नापि निमित्तादेशयोः "शात्" इति ज्ञापकात् ॥ इत्यभिप्रेत्योदाहरति-**रामश्चिनोतीति** ॥ ४ 'स्तो.' इति, "तो. षि" इत्यतः 'तो.' इति, "न पदान्तात्-" इत्यतः 'न' इति च वर्तते । तत्र निषेधः प्राप्तस्यैवेति यत् प्राप्तं तदाह-**चुत्वमिति** ॥ ५ "स्तोः श्चुना" इत्यतः 'स्तोः' इति वर्ततेऽत आह-**स्तोरिति** ॥ अत्रापि स्थान्यादेशयोरेव यथासंख्यम् "तोः षि" इति ज्ञापकात् इत्यभिप्रेत्योदाहरति-**रामष्टीकते पेष्टेति** ॥ ६ 'स्तोः' इति 'ष्टु' इति च वर्ततेऽत आह-**स्तोरिति** ॥ ७ पदान्ते टकारस्य जश्त्वेन डवर्गएव मेलिष्यतीति पृच्छति-**टोः किमिति** ॥

किम् । सर्पिष्टमम् । ( अनाम्नवतिनगरीणामिति वाच्यम् ) षण्णाम् । षण्णवतिः । षण्णगर्य्यः ॥ **तोः षि ८।४।४३॥** न ष्टुत्वम् ।सन्षष्ठः॥ **झलां जशोन्ते ८।२।३९॥** पदान्ते झलां जशः स्युः।वागीशः॥ **यरोनुनासिकेऽनुनासिको वा ८।४।४५॥** यरः पदान्तस्यानुनासिके परेऽनुनासिको वा स्यात् । एतन्मुरारिः, एतद् मुरारिः । ( प्रत्यये भाषायां नित्यम् ) । तन्मयम् । चिन्मयम् ॥ **तोर्लि ८।४।६०॥** तवर्गस्य ऌकारे परे परसवर्णः। तल्लयः । विद्वाँल्लिखति । नस्यानुनासिको लः ॥ **उदः स्थास्तम्भोः पूर्वस्य ८।४।६१॥** उदः परयोः स्थास्तम्भोः पूर्वसवर्णः ॥ **तस्मादित्युत्तरस्य १।१।६७॥** पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य

---

१ "ह्रस्वात्तादौ तद्धिते" इति जातस्य षत्वस्य जश्त्व प्रत्यसिद्धत्वात् षकारो मेलिष्यतीत्युदाहरति–**सर्पिष्टममिति** ॥ २ "न पदान्तात्–" इत्यतः 'न' इति, "ष्टुना ष्टु" इत्यतः 'ष्टुः' इति च वर्तते इत्याह–**न ष्टुत्वमिति** ॥ ३ "पदस्य" इत्यनुवर्त्याह–**पदान्ते इति** ॥ ४ "पदस्य" इत्यनुवर्त्य "येन विधिः" इत्युपस्थित्या 'यरन्तस्य पदस्य' इत्यर्थे "अलोऽन्त्यस्य" इति परिभाषोपस्थितिलब्धमर्थमाह–**यरः पदान्तस्येति** ॥ ५ यरः पदान्तस्यानुनासिकेऽनुनासिकः । इति शेषः । 'वेद्मि' इत्यादौ तु पदान्तत्वाभावान्नानुनासिक इति बोध्यम् ॥ ६ "अनुस्वारस्य ययि–" इति सूत्रात् 'परसवर्णः' इति वर्तत इत्याह–**परेति** ॥ ७ "अनुस्वारस्य –"इति सूत्रतः 'सवर्ण' इति वर्तते इत्याह–**पूर्वसवर्ण इति** ॥ ८ "तस्मिन्निति निर्दिष्टे" इत्यतः 'इति निर्दिष्टे' इति वर्ततेऽत आह–अव्यवहितस्य परस्येति ॥

परस्य ज्ञेयम् ॥ **आदेः परस्य १।१।५४** ॥ परस्य यद्विहितं तत्तस्यादेर्बोध्यम् । इति सस्य थः ॥ **झरो झरि सवर्णे ८।४।६५**॥ हलः परस्य झरो वा लोपः सवर्णे झरि ॥ **खरि च ८।४।५५** ॥ खरि झलां चरः स्युः । इत्युदो दस्य तः । उत्थानम् । उत्तम्भनम् । **झयो होऽन्यतरस्याम् ८।४।६२** ॥ झयः परस्य हस्य वा पूर्वसवर्णः । नादस्य घोषस्य संवारस्य महाप्राणस्य तादृशो वर्गचतुर्थः । वाग्घरिः, वाग्हरिः ॥ **शश्छोऽटि ८।४।६३** ॥ झयः परस्य शस्य छो वाऽटि । तद् शिव इत्यत्र दस्य श्चुत्वेन जकारे कृते खरि चेति जकारस्य चकारः । तच्छिवः, तच्शिवः । ( छत्वममीति वाच्यम् )। तच्छ्लोकेन ॥ **मोऽनुस्वारः ८।३।२३**॥ मान्तस्य पदस्यानुस्वारो हलि हरिं वन्दे ॥ **नश्चापदान्तस्य झलि ८।३।२४** ॥ नस्य मस्य चापदान्तस्य झल्यनुस्वारः । यशांसि । आक्रंस्यते । झलि किम् । मन्यसे ॥

---

१ " अलोऽन्त्यस्य " इत्यस्यापवादः ॥ सस्येति । अघोपमहाप्राणप्रयत्नवतः सस्य तादृश एव थकार इत्यर्थः ॥ २ " हलो यमां यमि लोपः" इत्यतः 'हलः' इति, 'लोपः' इति च वर्तते । ३ " झलां जश् झशि " इत्यतो 'झलाम्' इति, " अभ्यासे चर्च " इत्यतः ' चर् ' इति च बहुवचनविपरिणत वर्ततेऽत आह-**खरीति** ॥ दस्येति । भाष्य समताष्टाध्यायीपाठस्वीकारे तु लोपाभावपक्षे आदेशभूतथकारस्यापीति बोध्यम् ॥ ४ अनुवर्त्याह-**पूर्वसवर्ण इति** ॥ ५ "वा पदान्तस्य" इत्यत 'पदान्तात्' इति विभक्तिविपरिणामेनानुवर्त्योदाहरति-' **तद्+शिव**' इत्यत्रेति ॥ ६ " पदस्य" इत्यधिकृत्य " येन विधिः " इति तदन्तविधिलभ्यमर्थमाह-**मान्तस्येति** । "हलि सर्वेषाम् " इत्यतो हलीति च ॥ ७ " मोऽनुस्वारः " इत्यतः ' मः ' इति 'अनुस्वारः' इति चानुवर्ततेऽत आह-**मस्य चेति** ॥

**अनुस्वारस्य ययि परसवर्णः ८।४।५८॥** स्पष्टम् । शान्तः ॥ **वा पदान्तस्य ८।४।५९॥** त्वङ्करोषि, त्वं करोषि ॥ **मो राजि समः क्वौ ८।४।२५॥** क्विबन्ते राजतौ परे समो मस्य मे एव स्यात् सम्राट् ॥ **हे मपरे वा ८।३।२६॥** मपरे हकारे परे मस्य मो वा । किम् ह्मलयति, किं ह्मलयति ॥ (यवलपरे यवला वा) किय्ँ ह्यः, किं ह्यः । किव्ँ ह्वलयति, किं ह्वलयति किल्ँ ह्लादयति, किं ह्लादयति ॥ **नपरे नः ८।३।२७॥** नपरे हकारे मस्य नो वा किन् ह्नुते, किं ह्नुते ॥ **आद्यन्तौ टकितौ १।१।४६॥** टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः ॥ **ङ्णोः कुक्टुक् शरि ८।३।२८॥** वा स्तः (चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्)।

---

१ "मोऽनुस्वारः" इत्यतः 'मः' इति षष्ठ्यन्तमनुवर्तते । मकारस्य मकारविधानमनुस्वारव्यावृत्त्यर्थमित्याह–मस्य म एवेति ॥ २ "मोऽनुस्वारः" इत्यतः 'मः' इति षष्ठ्यन्तम्, "मो राजि–" इत्यतो 'मः' इति प्रथमान्तं च वर्तते इत्याह–मस्य मो वेति ॥ ३ 'मः' इति षष्ठ्यन्त, 'हे' इति चानुवर्तते । तथा च 'यवलपरे हकारे परे मस्य यवला वा' इत्यर्थः ॥ ४ 'मः' इति षष्ठ्यन्तम्, 'हे' इति चानुवर्तते 'वा' इति च ॥ ५ टश्च कश्च टकौ ताविती ययोस्तौ टकितौ । 'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति न्यायमाश्रित्याह–टित्कितावित्ति ॥ यथासंख्यपरिभाषालब्धमर्थमाह–क्रमादिति ॥ ६ "हे मपरे वा" इत्यतो 'वा' इति वर्ततेऽत आह–वेति ॥ ७ 'चय्प्रत्याहारवाच्यवर्णानां लोकप्रसिद्धवर्गाद्यवर्णानां स्वस्ववर्गद्वितीयवर्णा भवन्ति' इत्यर्थः ।

प्राङ्ख् पष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः । सुगण्ठ् षष्ठः, सुगण्ट् षष्ठः, सुगण् षष्ठः ॥ **डः सि धुट् ८।३।२९॥** डात्परस्य सस्य धुड्वा । षट्त्सन्तः, षट् सन्तः ॥ **नश्च ८।१।३०॥** नान्तात्परस्य सस्य धुड्वा । सन्त्सः, सन्सः ॥ **शि तुक् ८।३।३१॥** पदान्तस्य नस्य शे परे तुग्वा । सञ्छम्भुः, सञ्च्छम्भु सञ्च्शम्भुः, सञ्शम्भुः ॥ **ङमो ह्रस्वादचि ङमुण् नित्यम् ८।३।३२ ॥** ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुट् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः ॥ **समः सुटि ८।३।५॥ ॥** समो रुः सुटि ॥ **अत्रानुनासिकः**

---

१ "ह्रे मपरे—" इत्यतो 'वा' इति वर्तते । 'डः' इति पञ्चमी 'सि' इति सप्तमी । तथा च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'सि' इति सप्तम्याः षष्ठ्यर्थत्वेनाह—**सस्य धुडिति** ॥ २ "डः सि धुट्" इत्यतः 'सि धुट्' इति, 'वा' इति चानुवर्तते 'सि' इति सप्तम्याः षष्ठ्यर्थत्वमङ्गी कृत्याह—**सस्येति** ॥ ३ "पदस्य" इत्यधिकृत्य "नश्च" इत्यतः 'नः' इति 'वा' इति वर्तते । 'नः' इति पञ्चम्याः 'नश्च' इत्यत्र चरितार्थतया 'शि' इति सप्तम्या निरवकाशत्वमङ्गीकृत्य पञ्चम्याः षष्ठ्यर्थत्वमङ्गीकृत्याह—**पदान्तस्येति** ॥ ४ नित्यप्रहसितः नित्यप्रजल्पित इत्यादाविव नित्यपदं प्रायः समानार्थकम् । तेन "इको यणचि" "सुप्तिङन्तं" "सनाद्यन्ताः" इत्यादौ ङमुड् न कृत इति भावः ॥ ५ 'अचि' इति सप्तम्याः षष्ठ्यर्थत्वमाश्रित्याह—अच इति ॥ ६ "मतुवसो रु सम्बुद्धौ छन्दसि" इत्यतो 'रु' इति वर्तते । सुडत्रागम एव गृह्यते व्याख्यानादित्याह—रुरिति ॥

**पूर्वस्य तु वा ८।३।२॥** अत्र[1] रुप्रकरणे रोः पूर्वस्यानुनासिको वा॥ **अनुनासिकात्परोऽनुस्वारः ८।३।४॥** अनुनासिकं[2] विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः ॥ **खरवसानयोर्विसर्जनीयः ८।३।१५॥** खरि अवसाने च पदान्तस्य[3] रस्य विसर्गः। ( सम्पुङ्कानां सो वक्तव्यः )। सँस्स्कर्त्ता, संस्स्कर्ता ॥ **पुमः खय्यम्परे ८।३।६॥** अम्परे खयि पुमो रुः[4]। पुँस्कोकिलः, पुंस्कोकिलः॥ **नश्छव्यप्रशान् ८।३।७॥** अम्परे[5] छवि नान्तस्य पदस्य[6] रुः। न तु प्रशान्शब्दस्य ॥ **विसर्जनीयस्य सः ८।३।३४॥** खरि[7]। चक्रिंस्त्रायस्व, चक्रिंस्त्रायस्व। अप्रशान् किम्। प्रशान्तनोति। पदस्येति किम्। हन्ति॥

---

१ 'अत्र' इत्यस्य रुप्रकरण इति। तदपि "ससजुषो रुः" इति विहितं न ग्राह्यम् एतदेव बोधयितुं 'रौ' इति विहाय 'अत्र' इत्युक्तम्॥ "मतुव्वसो-" इत्यतो 'रु.' इत्यनुवर्त्य दिग्योगलक्षणपञ्चमीं च कृत्वाह-**रोः पूर्वस्येति**॥ २ "अनुनासिकात्" इति पञ्चमी "ल्यब्लोपे कर्मणि" इत्यभिप्रेत्याह-**अनुनासिकं विहायेति**। अर्थाअथवा अनुनासिकघटितप्रयोगमित्यर्थः। 'रुः' 'पूर्वस्य' इति अनुवर्त्य योग्यतया विभक्तिं विपरिणमय्य व्याचष्टे-**रोः पूर्वस्म त् पर इति**॥ ३ "पदस्य" इत्यधिकृत्य "रो रि" इत्यत. 'रः' इत्यनुवर्त्य तदन्तविधिना 'रान्तस्य पदस्य' इत्यर्थे अलोऽन्त्यविधिलब्धमर्थमाह-**पदान्तस्येति**॥ ४ "खर्परे शरि वा विसर्गलोपः" इत्यस्य "कुप्वोः ≍क ≍पौ च" इत्यस्य चापवादः॥ ५ "मतुव्वसो-" इत्यतः 'रुः' इत्यनुवर्त्याह-**रुरिति**॥ ६ "पदस्य" इत्यधिकृतस्य विशेषणे 'नः' इत्यत्र तदन्तविधिः। 'रुः' 'अम्परे' इत्यनुवर्त्यते इत्याह-**अम्पर इति**॥ ७ "खरवसानयो-" इत्यतोऽनुवर्त्याह-**खरीति**॥

**नॄन् पे ८।३।१०** नॄनित्यस्य[1] रुर्वा पे ॥ **कुप्वोः ≍क ≍पौ च ८।३।३७॥** कवर्गे पवर्गे च विसर्गस्य[2] ≍क ≍पौ स्तः चाद्विसर्गः। नॄँ≍पाहि, नॄँःपाहि, नॄं≍पाहि, नॄंःपाहि। नॄन्पाहि ॥ **तस्य परमाम्रेडितम् ८।१।२ ॥** द्विरुक्तस्य[3] परमाम्रेडितं स्यात् ॥ **कानाम्रेडिते ८।३।१२ ॥** कान्नकारस्य[4] रुः स्यादाम्रेडिते। काँस्कान्, कांस्कान् ॥ **छे च ६।१।७२ ॥** ह्रस्वस्य[5] छे तुक्। शिवच्छाया ॥ **पदान्ताद्वा ६।१।७६ ॥** दीर्घात्[6]पदान्ताच्छे तुग् वा। लक्ष्मीच्छाया, लक्ष्मीछाया ॥

इति हल्संधिः।

---

१ द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम्। 'रुः' इति "उभयथर्क्षु" इत्यत उभयथेति चानुवर्तते। पे इत्यकारो न विवक्षितः। तेन प्रीणाति पुनाति इत्यादावपि रुः सिध्यति इत्यभिप्रायवानाह-**नॄनित्यस्येति** ॥ २ "शर्परे विसर्जनीयः" इत्यतो 'विसर्जनीयः' इति चेनानुकृष्यते। "विसर्जनीयस्य सः" इत्यतो 'विसर्जनीयस्य' इति 'खरि' इति चानुवर्तते तेन 'नरो गच्छति, जनो बध्नाति' इत्यादौ खर्परत्वाभावेन विसर्गस्याजातत्वेन रोरुत्वं सिध्यतीति बोध्यम् ॥ ३ "सर्वस्य द्वे" इत्यनुवर्तते। तेनाभ्यासाधिकारविहितद्वित्वे नास्य प्रवृत्तिः ॥ ४ 'कान्' इति द्वितीयान्तानुकरणं लुप्तषष्ठ्यन्तम्। अलोन्त्यपरिभाषया 'नः' इत्यस्यानुवृत्त्या वा लब्धमर्थमाह-**कान्नकारस्येति** ॥ ५ "ह्रस्वस्य पिति कृति तुक्" इत्यत 'तुक्' इति 'ह्रस्वस्य' इति चानुवर्तते ॥ ६ "ह्रस्वस्य पिति कृति-" इत्यतः 'तुक्' इति "छे च" इत्यतः 'छे' इति "दीर्घात्" इति सूत्रं चानुवर्ततेऽत आह-**दीर्घादित्यादि** ॥ दीर्घस्यैवाय तुक् न तु छस्य "सेनासुराच्छाया" इति निर्देशात् ॥

**विसर्जनीयस्य सः ८।३।३४ ॥** खरि[1]। विष्णुस्त्राता ॥ **वा शरि ८।३।३६ ॥** शरि विसर्गस्य[2] विसर्गो वा । हरिः शेते, हरिश्शेते ॥ **ससजुषो रुः ८।२।६६ ॥** पदान्तस्य[3] सस्य सजुषश्च रुः स्यात् ॥ **अतो रोरप्लुतादप्लुते ६।१।११३ ॥** अप्लुतादतः परस्य रोरुः[4] स्यादप्लुतेऽति । शिवोऽर्च्यः ॥ **हशि च ६।१।११४ ॥** तथा[5] । शिवो वन्द्यः ॥ **भोभगोअघोअपूर्वस्य योऽशि ८।३।१७ ॥** एतत्पूर्वस्य रो[6]र्यादेशोऽशि । देवा इह, देवायिह । भोस् भगोस् अघोस् इति सान्ता निपाताः । तेषां रोर्यत्वे कृते ॥ **हलि सर्वेषाम् ८।३।२२ ॥** भोभगोअघोअपूर्वस्य[7] यस्य लोपः स्याद्धलि । भो देवाः । भगो नमस्ते । अघो याहि ॥ **रोऽसुपि ८।२।६९ ॥**

---

१ "खरवसानयो-" इत्यत 'खरि' इति वर्ततेऽत आह-खरीति ॥ २ "विसर्जनीयस्य" इति "शर्परे विसर्जनीयः" इत्यतो विसर्जनीय इति वर्ततेऽत आह-विसर्गस्येति ॥ ३ "पदस्य" इत्यनुवर्तते तदन्तविधिना 'सान्तस्य सजूरन्तस्य' पदस्य इत्यर्थेऽलोन्त्यपरिभाषालब्धमर्थमाह-पदान्तस्येति ॥ ४ "एङः पदान्तात्" इत्यतः 'अति' इति । "ऋत उत्" इत्यतः 'उत्' इति चानुवर्ततेऽत आह-उरिति ॥ ५ "अतो रोरप्लुतात्" इति, 'उत्' इति चानुवर्ततेऽत आह-तथेति ॥ ६ "रोः सुपि" इत्यतो 'रोः' इति वर्ततेऽत आह-रोरित्यादि ॥ ७ निपातानामपीत्यर्थः । तेन "विभाषा भवद्भगवदघवतामोच्चावस्य" इति निष्पन्नानामपि ग्रहण सिध्यतीति भावः ॥ ८ "भोभगोअघोअपूर्वस्य" इति "व्योर्लघु-" इत्यतो 'व्योः' इति "लोपः शाकल्यस्य" इत्यतो 'लोपः' इति वर्तते । तत्र वस्यैतत्पूर्वस्यासंभवादाह-भोभगोअघोअपूर्वस्येत्यादि ॥

अह्नो रेफादेशो न तु सुपि । अहरहः । अहर्गणः ॥ **रो रि ८।३।१४॥** रेफस्य रेफे परे लोपः ॥ **ढ्रलोपे पूर्वस्य दीर्घोऽणः ६।३।११०॥** ढरेफयोर्लोपनिमित्तयोः पूर्वस्याणो दीर्घः । पुनी रमते हरी रम्यः । शम्भू राजते । अणः किम् । तृढः । वृढः । मनस् रथ इत्यत्र रुत्वे कृते हशि चेत्युत्वे रोरीति लोपे च प्राप्ते ॥ **विप्रतिषेधे परं कार्यम् १।४।२॥** तुल्यबलविरोधे परं कार्यं स्यात् । इति लोपे प्राप्ते । पूर्वत्रासिद्धमिति रो रीत्यस्यासिद्धत्वादुत्वमेव । मनोरथः ॥ **एतत्तदोः सुलोपोऽकोरनञ्समासे हलि ६।१।१३२॥** अककारयोरेतत्तदोर्यः सुस्तस्य लोपो हलि न तु नञ्समासे । एष विष्णुः । स शम्भुः । अकोः किम् । एषको रुद्रः । अनञ्समासे किम् । असः शिवः । हलि किम् । एषोऽत्र ॥ **सोऽचि लोपे चेत्पादपूरणम् ६।१।१३४ ॥** स इत्यस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्य्येत । सेमामविड्ढि प्रभृतिम् । सैष दाशरथी रामः ॥

इति विसर्गसंधिः ॥

---

१ "अहन्" इति सूत्रं वर्ततेऽत आह–अह्न इत्यादि ॥ २ "ढो ढे लोपः" इति सूत्रात् 'लोपः' इति वर्ततेऽत आह–लोप इति ॥ ३ ढश्च रश्च ढ्रौ ढ्रौ लोप्यत इति ढ्रलोपौ इति विग्रहफलितमर्थमाह–ढरफयोर्लोपनिमित्तयोरिति ॥ ४ समासाभावेपि पूर्वस्य दीर्घसिद्धये पूर्वग्रहणमित्याभिप्रायेणोदाहरति–पुना रमत इत्यादि ॥ ५ अन्यत्रान्यत्र लब्धावकाशयोरेकत्र युगपत्प्राप्तिस्तुल्यबलविरोधः ॥ ६ 'सः' इति प्रथमान्तानुकरणं लुप्तषष्ठ्यन्तम् ॥ 'सुलोप' इति वर्ततेऽत आह–स इत्यस्येति ॥ पादशब्देनात्र ऋक्पादवच्छ्लोकपादोऽपि ग्राह्य इत्याशयेन ऋक्पादमुदाहृत्य श्लोकपादमुदाहरति–सैष दाशरथिरिति ॥

अथ षड्लिङ्गेषु अजन्तपुँल्लिङ्गाः ।

**अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १।२।४५ ॥** धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वा अर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात् ॥ **कृत्तद्धितसमासाश्च १।२।४६ ॥** कृत्तद्धितान्तौ समासाश्च तथा स्युः ॥ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ४।१।२ ॥** सु औ जस् इति प्रथमा । अम् औट् शस् इति द्वितीया । टा भ्याम् भिस् इति तृतीया । ङे भ्याम् भ्यस् इति चतुर्थी । ङसि भ्याम् भ्यस् इति पञ्चमी । ङस् ओस् आम् इति षष्ठी । ङि ओस् सुप् इति सप्तमी ॥ **ङ्याप्प्रातिपदिकात् ४।१।१॥ प्रत्ययः ३।१।१॥ परश्च ३।१।२॥** इत्यधिकृत्य ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः ॥ **सुपः १।४।१०१ ॥** सुपस्त्रीणित्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि स्युः ॥ **द्व्येकयोर्द्विवचनैकवचने १।४।२२॥**

---

१ लौकिके प्रयोगे प्रसिद्धतरो योऽर्थस्तद्वत्त्वम् अर्थवत्त्वम् ॥ अर्थवद्ग्रहणं धनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञावारणाय ॥ अहमित्यादौ तद्वारणाय 'अधातु' इति ॥ २ क्विबन्तविजन्तेषु धातुत्वानपायात्प्रातिपदिकत्वसिद्धये कृद्ग्रहणम् ॥ तद्धितान्तेषु प्रत्ययान्तत्वानपायात् प्रातिपदिकत्वसिद्धये तद्धितग्रहणम् । समासपदं तु नियमार्थम्—

"अत्रार्थवति संघाते पूर्वो भागस्तथोत्तरः ॥

स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत् ॥ इति ॥"

३ "तिङस्त्रीणित्रीणि" इत्यत 'त्रीणित्रीणि' इति "तान्येकवचन—" इत्यतः 'एकवचनद्विवचनबहुवचनान्येकशः' इति चानुवर्त्याह—त्रीणि त्रीणीति॥

द्वित्वैकत्वयोरेते स्तः ॥ **विरामोऽवसानम् १।४।११०** ॥ वर्णा-नामभावोऽवसानसंज्ञः स्यात् । रुत्वविसर्गौ । रामः ॥ **सरूपाणामे-कशेष एकविभक्तौ १।२।६४** ॥ एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते ॥ **प्रथमयोः पूर्वसवर्णः ६।१।१०२** ॥ अकः प्रथमाद्वितीययोरचि पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते ॥ **नादिचि ६।१।१०४** ॥ आदिचि न पूर्वसवर्णदीर्घः । वृद्धिरेचि । रामौ ॥ **बहुषु बहुवचनम् १।४।२१** ॥ बहुत्वविवक्षायां बहुवचनं स्यात् ॥ **चुटू १।३।७** ॥ प्रत्ययाद्यौ चुटू इतौ स्तः ॥ **विभ-**

---

१ भाष्यकृता-" एकवचनम् " इति सामान्यसूत्रं विधायकं कृत्वा तस्य बाधकम् " द्विबह्वोर्द्विवचनबहुवचने " इति सूत्रं कृत्वा सप्तम्यन्तम् एकंपदं-प्रत्याख्यातम् ॥ तथा च असङ्ख्येभ्योऽव्ययेभ्योऽप्येकवचनं सिध्यति ॥ २ लोके प्रतीतपदार्थकध्वन्यात्मकशब्दानुशासनेऽभावो भावो वा योग्यतया वर्णानामेव संभवतीत्यत आह-**वर्णानामिति** ॥ अभावश्चायं संसर्गाभावो 'विवक्' इत्यादौ प्रध्वंसाभावो 'राम.' इत्यादावत्यन्ताभावो बोध्यः ॥ ३ "वृद्धो यूना-" इत्यत 'एव' इत्यपकृष्याह-**सरूपाण्येवेति** ॥ तेन जननीपरिच्छेत्तृवाचिनोर्मातृशब्दयो-र्नैकशेषः भ्यामादिषु सारूप्येऽप्यौजसादौ वैरूप्यात् ॥ ४ "अक. सवर्णे दीर्घः" इत्यत. 'अकः' इति, 'दीर्घः' इति, च "इको यणचि" इत्यतो 'अचि' इति, वर्ततेऽत आह-**अक इत्यादि** ॥ ५ "प्रथमयोः पूर्वसवर्णः" इति वर्ततेऽत आह-**पूर्वसवर्णेति** ॥ ६ "वृद्धिरेचि" इत्येतद् बाधितुमुद्यतस्यैव "प्रथमयोः" इति पूर्वसवर्णदीर्घस्य "नादिचि" इत्यनेन बाधनात् "वृद्धिरेचि" इत्येतदबाधितमेव प्रवर्तत इति भाव· ॥ ७ "उपदेशेऽज्-" इत्यतः 'इत्' इति "ष· प्रत्ययस्य" इत्यतः " प्रत्ययस्य " इति " आदिर्ञिटुडवः-" इत्यतः 'आदिः' इति च वर्ततेऽत आह **प्रत्ययाद्या इति** ॥

**क्तिश्च १।४।१०** ॥ सुप्तिङौ विभक्तिसञ्ज्ञौ स्तः[1] ॥ **न विभक्तौ तुस्माः १।३।४** ॥ विभक्तिस्थास्तवर्गसमा नेतः[2] । इति सस्य नेत्त्वम् । रामाः ॥ **एकवचनं सम्बुद्धिः २।३।४९** ॥ सम्बोधने प्रथमाया एकवचनं सम्बुद्धिसञ्ज्ञं स्यात्[3] ॥ **यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १।४।१३** ॥ यः प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूप तस्मिन्नङ्गं स्यात् ॥ **एङ्ह्रस्वात्सम्बुद्धेः ६।१।६९** ॥ एँङन्ता ह्रस्वान्ताच्चाङ्गाद्धल्लुप्यते सम्बुद्धेश्चेत्[4] । हे राम । हे रामौ । हे रामाः ॥ **अमि पूर्वः ६।१।१०७** ॥ अकोऽम्यचि पूर्वरूपमेकादेशः[5] । रामम् । रामौ ॥ **लशक्वतद्धिते १।३।८** ॥ तद्धितवर्जप्रत्ययाद्या लशकवर्गा

---

१ "तिङस्त्रीणित्रीणि" इत्यतः 'तिङः' इति, "सुपः" इति सूत्रं चानुवर्ततेऽत आह–सुप्तिङाविति ॥ २ "उपदेशेज्" इत्यतः 'इत्' इति वर्ततेऽत आह–नेत इति ॥ ३ "संबोधने च" इत्यतः 'संबोधने' इति "प्रातिपदिकार्थलिङ्ग–" इति सूत्रत. 'प्रथमा' इति वर्ततेऽत आह–सम्बोधन इत्यादि ॥ ४ "लोपो व्योर्वलि" इत्यतो 'लोप' इति, "हल्ङ्याब्भ्यो:-" इत्यतो 'हल्' इति वर्तते "प्रत्ययग्रहणे यस्मात्स विहितस्तदादेः" इतिपरिभाषयाऽङ्गपर्यायस्य तदाद्यशस्योपस्थितौ तदन्तविधिना फलितमर्थमाह–एङन्तादित्यादि ॥ ५ "इको यण्–" इत्यतोऽचीति "एकः पूर्वपरयो" इति च वर्ततेऽत आह अचीति ॥ ६ "उपदेशेऽज्–" इत्यतः 'इत्' इति, "ष प्रत्ययस्य" इत्यतः 'प्रत्ययस्य' इति, "आदिर्ञिटुडवः" इत्यत 'आदि' इति च वर्ततेऽत आह–प्रत्ययाद्या इति ॥ रोमशः. भिक्षल. नौका इत्यादिव्यावृत्तये अतद्धित इति ॥

इतः स्युः ॥ **तस्माच्छसो नः पुंसि ६।१।१०३** ॥ पूर्वसवर्णदीर्घात्परो यः शसः सस्तस्य नः स्यात्पुंसि ॥ **अट्कुप्वाङ्नुम्व्यवायेपि ८।४।२** ॥ अट् कवर्गः पवर्ग आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रेफाभ्यां परस्य नस्य णः समानपदे । इति प्राप्ते ॥ **पदान्तस्य ८।४।३७॥** नस्य णो न । रामान् ॥ **टाङसिङसामिनात्स्याः ७।१।१२** ॥ अदन्ताट्टादीनामिनादयः स्युः । णत्वम् । रामेण ॥ **सुपि च ७।३।१०२** ॥ यञादौ सुपि अतोऽङ्गस्य दीर्घः । रामाभ्याम् ॥ **अतो भिस ऐस् ७।१।९** ॥ अनेकाल्शित्सर्वस्य । रामैः॥**ङेर्यः ७।१।१३॥** अतोऽङ्गात्परस्य ङेर्यादेशः ॥ **स्थानिवदा-**

---

१ "प्रथमयोः" इत्यतः 'पूर्वसवर्णदीर्घः' इत्यनुवर्ततेऽत आह-**पूर्वसवर्णदीर्घादिति** ॥ २ "रषाभ्यां नो णः समानपदे" इति सूत्र वर्ततेऽत आह-**रषाभ्यामिति**॥ निमित्तानधिकरणनिमित्तिमत्पदाघटितत्व समानपदत्वम् ॥ ३ "रषाभ्या नो णः समानपदे" इति वर्तते "न भाभू-" इत्यतो 'न' इति चेत्यत आह- **नस्येत्यादि** ॥ "अपदान्तस्य मूर्धन्यः" इत्यधिकार णत्व-प्रकरणेऽप्यानीय "रषाभ्या-" सूत्रे णग्रहण "पदान्तस्य" इति सूत्रं च भाष्य-कृता प्रत्याख्यातम् ॥ ४ "अतो भिस-"-इत्यतः 'अत' इति वर्तते "अङ्गस्य" इत्यधिक्रियते विशेषणे तदन्तविधिरित्याह- **अदन्तादिति** ॥ ५ "अतो दीर्घो यञि" इति वर्तते विशेषणे तदादिविधि. "अङ्गस्य" इत्यधिक्रियते इत्याह-**यञादाविति** ॥ ६ "अतो भिस-" इत्यत. 'अत' वर्तते "अङ्गस्य" इत्यधिक्रियते च । 'ङेः' इति चतुर्थ्येकवचनङेशब्दस्यैव षष्ठ्यन्तम् न तु सप्तम्येकवचनङि-शब्दस्य "बहुवचने" इत्यादिनिर्देशात् ॥

**देशोऽनल्विधौ १।१।५६ ॥** आदेशः स्थानिवत्स्यान्न तु स्थान्यलाश्रयविधौ । इति स्थानिवत्त्वात् सुपि चेति दीर्घः । रामाय । रामाभ्याम् ॥ **बहुवचने झल्येत् ७।३।१०३ ॥** झलादौ बहुवचने सुप्यतोऽङ्गस्यैकारः । रामेभ्यः । सुपि किम् । पचध्वम् ॥ **वाऽवसाने ८।४।५६ ॥** अवसाने झलां चरो वा । रामात्, रामाद् । रामाभ्याम् । रामेभ्यः । रामस्य ॥ **ओसि च ७।३।१०४ ॥** अतोऽङ्गस्यैकारः । रामयोः ॥ **ह्रस्वनद्यापो नुट् ७।१।५४ ॥** ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः ॥ **नामि ६।४।३ ॥** अजन्ताङ्गस्य दीर्घः । रामाणाम् । रामे । रामयोः । सुपि–एत्वे कृते ॥

---

१ "सुपि च" इति दीर्घे कर्तव्ये 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इनि परिभाषा तु न प्रवर्तते " कष्टाय क्रमणे " इति निर्देशात् ॥ २ "अतो दीर्घो यञि " इत्यत. ' अतः ' इति "अङ्गस्य " इति, " सुपि च " इत्यतः ' सुपि ' इति वर्तते ॥ ३ "झलां जश् झशि " इत्यतो झलामिति, "अभ्यासे चर्च " इत्यतः ' चर् ' इति वर्तते ॥ ४ "अतो दीर्घो–" इत्यत. 'अत.' इति "अङ्गस्य" इति च "बहुवचने झलि"इत्यत 'एत्' इति च वर्तते ॥ ५ "अङ्गस्य" इति विभक्तिविपरिणतम् अधिक्रियते विशेषणे तदन्तविधि· "आमि सर्वनाम्न·–" इत्यत. 'आमि' इति वर्तते षष्ठ्या विपरिणम्यतेऽत आह–ह्रस्वान्तादित्यादि । ६ " ढ्रलोपे पूर्वस्य–"इत्यत 'दीर्घ' इति वर्तते दीर्घविधिश्रुत्या "ह्रस्वदीर्घप्लुत. शब्दैर्यत्र विधान तत्र 'अच'·इति षष्ठ्यन्तं पदमुपतिष्ठते" इत्यर्थकेन "अचश्च" इति सूत्रेण 'अच. 'इत्युपतिष्ठते । "अङ्गस्य"इत्यधिक्रियते विशेषणे तदन्तविधि. रित्याह–अजन्ताङ्गस्येत्यादि ॥ ७ "गाल्वानाम्" "प्रत्ययादीनाम्" इत्यादि· निर्देशैः सनिपातपरिभाषाऽत्रापि दीर्घे न प्रवर्तते ॥

**आदेशप्रत्यययोः ८।३।५९ ॥** इण्कुभ्यां परस्यापदान्तस्यादेशस्य प्रत्ययावयवस्य यः सस्तस्य मूर्धन्यादेशः । ईषद्विवृतस्य सस्य तादृश एव षः । रामेषु । एवं कृष्णादयोऽप्यदन्ताः ॥ **सर्वादीनि सर्वनामानि १।१।२७ ॥** सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्वत् त्व नेम सम सिम । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तरं बहिर्योगोपसंव्यानयोः । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् ॥ **जसः शी ७।१।१७ ॥** अदन्तात्सर्वनाम्नो जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः। सर्वे ॥ **सर्वनाम्नः स्मै ७।१।१४॥** अतः सर्वनाम्नो ङेः स्मै । सर्वस्मै ॥ **ङसिङ्योः स्मात्स्मिनौ ७।१।१५ ॥** अतः सर्वनाम्न एतयोरेतौ स्तः । सर्वस्मात् **आमि सर्वनाम्नः सुट् ७।१।५२॥** अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः । एत्वषत्वे । सर्वेषाम् । सर्वस्मिन् । शेषं रामवत् ।

---

१ "अपदान्तस्य मूर्धन्यः" "इण्कोः" इत्यधिकृत्य "सहेः साडः सः" इत्यतः 'सः' इति अनुवर्त्याह–**इण्कुभ्यामिति** ॥ २ "अतो भिस–" इत्यतो 'अतः' इति "सर्वनाम्नः स्मै" इत्यतः 'सर्वनाम्नः' इति च वर्तते विशेषणे तदन्तविधिरित्यत आह–**अदन्तादित्यादि** ॥ ३ "अतो भिस–" इत्यतः 'अतः' इति 'ङेर्यः' इत्यतो 'ङेः' इति वर्ततेऽतआह–**अतः सर्वनाम्न इति** ॥ ४ "अतो भिस–" इत्यतः 'अतः' इति "सर्वनाम्नः स्मै" इत्यतः 'सर्वनाम्न' इति च वर्ततेऽत आह–**अतः सर्वनाम्न इत्यादि** ॥ ५ "आज्जसेरसुक्" इत्यत 'आद्' इति वर्तते विशेषणे तदन्तविधिरित्याह–**अवर्णान्तादिति** ॥

एवं त्रिश्वादयोऽप्यदन्ताः ॥ उभशब्दो द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः२। तस्येह पाठोऽकजर्थः । उभयशब्दस्य द्विवचनं नास्ति । उभयः। उभये । उभयम् । उभयान् । उभयेन । उभयैः । उभयस्मै । उभयेभ्यः। उभयस्मात् । उभयेभ्यः। उभयस्य । उभयेषाम् । उभयस्मिन् । उभयेषु॥ डतरडतमौ प्रत्ययौ प्रत्ययग्रहणे तदन्तग्रहणमिति तदन्ता ग्राह्याः ॥ नेम इत्यर्द्धे ॥ समः सर्वपर्य्यायः । तुल्यपर्य्यायस्तु न, यथासङ्ख्यमनुदेशः समानामिति ज्ञापकात् ॥ **पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १।१।३४॥** एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणसूत्रात्सर्वत्र या प्राप्ता सा जसि वा स्यात् । पूर्वे, पूर्वाः । असंज्ञायां किम्। उत्तराः कुरवः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्।दक्षिणा गाथकाः। कुशला इत्यर्थः ॥ **स्वमज्ञातिधनाख्यायाम् १।१।३५॥** ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा । स्वे, स्वाः । आत्मीयाः आत्मान इति वा । ज्ञातिधनवाचिनस्तु । स्वाः । ज्ञात-

---

१ 'उभयो मणिः उभये देवमनुष्याः' इति भाष्यकृता द्विवचनस्यादर्शितत्वात् ॥ २ कतर-कतम-यतर-यतम-ततर-ततम-एकतर-एकतमशब्दाः । ३ "सर्वादीनि-" इत्यतः 'सर्वनामानि' इति "विभाषा जसि" इति च वर्तते ॥ गणसूत्रैः सिद्धावेकवाक्यतायां आह-एतेषामिति ॥ ४ स्वस्याभिधेयः स्वाभिधेयः स्वाभिधेयम् अपेक्षते स्वाभिधेयापेक्षः स चासाववधिर्नियम स्वाभिधेयापेक्षावधिनियमः इति विग्रह ॥ ५ 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरः ॥ "विभाषा जसि" 'सर्वनामानि' इति वर्ततेऽत आह-ज्ञातिधनान्येति॥

योऽर्था वा ॥ **अन्तरं बहिर्योगोपसंव्यानयोः १।१।३६ ॥** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य प्रोक्ता संज्ञा जसि वा । अन्तरे, अन्तरा वा गृहाः । बाह्या इत्यर्थः । अन्तरे, अन्तरा वा शाटकाः । परिधानीया इत्यर्थः ॥ **पूर्वादिभ्यो नवभ्यो वा ७।१।१६ ॥** एभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । एवं परादीनाम् । शेषं सर्ववत् ॥ **प्रथमचरमतयाल्पाऽर्धकतिपयनेमाश्च १।१।३३ ॥** एते जसि उक्तसंज्ञा वा स्युः । प्रथमे, प्रथमाः ॥ तयः प्रत्ययः । द्वितये, द्वितयाः । शेषं रामवत् ॥ नेमे, नेमाः । शेष सर्ववत् ॥ ( तीयस्य ङित्सु वा ) । द्वितीयस्मै, द्वितीयायेत्यादि । एव तृतीयः ॥ निर्जरः । **जराया जरसन्यतरस्याम् ७।२।१०१ ॥** अजादौ विभक्तौ । पदाङ्गाधिकारे तस्य तदन्तस्य च । निर्दिश्यमानस्यादेशा भवन्ति । एकदेशविकृतमन-

---

१ " सर्वनामानि" "विभाषा जसि" इति वर्तते ॥ २ " ङसिङ्योः स्मात्स्मिनौ" इति वर्तते ॥ ३ "सर्वनामानि" इति "विभाषा जसि" इति च वर्तते ॥ ४ ' ततस्तदन्ता ' द्वितय-द्वय-त्रितय-त्रय-चतुष्टय-पञ्चतय-षट्तय-सप्ततय-अष्टतय-नवतय-दशतयप्रभृतयो ग्राह्याः ॥ ५ सर्वनामसंज्ञा । ङिद्भ्योऽन्यत्र रामवत् ॥ ६ " अष्टन आ-" इत्यतः 'विभक्तौ' इति, " आचि र-" इत्यतः 'आचि' इति वर्तते विशेषणे तदादिविधिरित्याह-अजादौ विभक्ताविति ॥ ७ षष्ठीप्रकृति-जन्यप्राथमिकोपस्थितिविषयत्व निर्दिश्यमानत्वम् ॥ ८ छिन्नपुच्छे शुनि श्वत्वव्यवहारदर्शनादिति भावः ॥

स्यवदिति जरशब्दस्य जरस् । निर्जरसौ । निर्जरस इत्यादि । पक्षे हलादौ च रामवत् ॥ विश्वपाः ॥ **दीर्घाज्जसि च ६।१।१०५ ॥** विश्वपौ । विश्वपाः । हे विश्वपाः । विश्वपाम । विश्वपौ ॥ **सुडनपुंसकस्य १।१।४३ ॥** स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य ॥ **स्वादिष्वसर्वनामस्थाने १।४।१७॥** कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं पदं स्यात् ॥ **यचि भम् १।४।१८ ॥** यादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु पूर्वं भसंज्ञं स्यात् ॥ **आ कडारादेका संज्ञा १।४।१॥** इत ऊर्ध्वं कडाराः कर्मधारय इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया। या पराऽनवकाशा च ॥ **आतो धातोः ६।४।१४०॥** आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः । अलोऽन्त्यस्य । विश्वपः । विश्वपा । विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धातोः किम् । हाहान् । हाहः । हाहौ ॥

---

१ ‘ सुट् ’ इत्ययं सुमारभ्य औटष्टकारपर्यन्त प्रत्याहारः ‘ असंबुद्धौ ’ इति विशेषणसामर्थ्यात् “ शि सर्वनामस्थानम् ” इत्यत. ‘सर्वनामस्थानम्’ इति वर्ततेऽत आह–**स्वादीति** ॥ २ “सुप्तिङन्तम्–” इत्यत. ‘पदम्’ इति वर्तते । बहुव्रीहिलभ्यमर्थमाह–**कप्प्रत्ययावधीति** ॥ ३ समासान्तविधेरनित्यत्वेऽपीदमेव प्रमाणम् ॥ ‘ स्वादिषु ’ ‘असर्वनास्थाने’ इत्यनुवर्त्याह–**यादिष्वित्यादि** ॥ ४ एव चात्र भसंज्ञैव न पदसंज्ञेति भाव. ॥ ५ “ भस्य ” “ अंगस्य ” इत्यधिक्रियेते “ अल्लोपोऽन ” इत्यत. ‘ लोपः ’ इत्यनुवर्तते विशेषणे तदन्तविधिद्वयमित्याह–**आकारान्त इति** ॥

**जसि च ७।३।१०९॥** ह्रस्वान्तस्याङ्गस्य गुणः । हरयः॥ **ह्रस्वस्य गुणः ७।३।१०८॥** सम्बुद्धौ । हे हरे । हरिम् । हरी । हरीन् ॥ **शेषो घ्यसखि १।४।७॥** शेष इति स्पष्टार्थम् । ह्रस्वौ याविदुतौ तदन्तं सखिवर्जं घिसंज्ञम्॥ **आङो नाऽस्त्रियाम् ७।३।१२०॥** घेः परस्याङो ना स्यादस्त्रियाम् । आङिति टासंज्ञा । हरिणा । हरिभ्याम् । हरिभिः ॥ **घेर्ङिति ७।३।१११॥** घिसञ्ज्ञस्य ङिति सुपि गुणः । हरये । हरिभ्याम् । हरिभ्यः ॥ **ङसिङसोश्च ६।१।११०॥** एङो ङसिङसोरति पूर्वरूपमेकादेशः । हरेः२। हर्योः२। हरीणाम् ॥ **अच्च घेः ७।३।११९॥** इदुद्भ्यामुत्तरस्य ङेरौत्, घेरच्च । हरौ । हरिषु । एव कव्यादयः॥ **अनङ् सौ ७।१।९३॥** सख्युरङ्गस्यानङादेशोऽसंबुद्धौ सौ ॥ **अलोऽन्त्यात्पूर्व उपधा १।१।६५॥** अन्त्यादलः पूर्वो वर्ण उप-

---

१ "अगस्य" इत्यधिक्रियते "ह्रस्वस्य गुणः" इत्यनुवर्ततेऽत आह-ह्रस्वान्तस्येति॥२"सबुद्धौ च" इत्यत. 'संबुद्धौ' इत्यनुवर्तते॥३"यू स्त्र्याख्यौ–" इत्यतः 'यू' इति " ङिति ह्रस्वश्च " इत्यत. 'ह्रस्व' इति च वर्ततेऽत आह–ह्रस्वावित्यादि ॥ ४ "अच्च घेः" इत्यत. 'घेः' इत्यनुवर्ततेऽत आह–घेः परस्येति॥ ५ " ह्रस्वस्य गुणः " इत्यत 'गुणः' इति, "सुपि च" इत्यतः ' सुपि ' इत्यनुवर्ततेऽत आह–सुपि गुण इति ॥६ "एङ. पदान्तादति " इत्यतः 'एङ.' इति, 'अति' इति च वर्तते, 'अमिपूर्वः' पूर्वरूपमेकादेश इति च ॥ ७ "ङेराम्–" इत्यतः 'ङेः' इति, "इदुद्भ्याम्" इति " औत् -" इति च वर्ततेऽत आह–इदुद्भ्यामित्यादि ८ " सख्युरसंबुद्धौ " इति " अङ्गस्य " इति च वर्ततेऽत आह–सख्युरित्यादि ॥ ९ पूर्वोऽपि अन्त्यात्सजातीय एव ग्राह्य इत्याह– पूर्वो वर्ण इति ॥

धासंज्ञः ॥ **सर्वनामस्थाने चासंबुद्धौ ६।४।८॥** नोन्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने ॥ **अपृक्त एकाल् प्रत्ययः १।२।४१॥** एकाल् प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् ॥ **हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् ६।१।६८॥** हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सुतिसीत्येतदपृक्तं हल् लुप्यंते । **न लोपः प्रातिपदिकान्तस्य ८।२।८॥** प्रातिपदिक[3]संज्ञकं यत्पदं तदन्तस्य नस्य लोपः । सखा ॥ **सख्युरसंबुद्धौ ७।१।९२॥** सख्युरङ्गात्परं सबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् ॥ **अचो ञ्णिति ७।२।११५॥** [5]अजन्ताङ्गस्य वृद्धिर्ञिति णिति च परे । सखायौ । सखायः । हे सखे । सखायम् । सखायौ । सखीन् । सख्या । सख्ये ॥ **ख्यत्यात्परस्य ६।१।११२॥** खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य

---

१ "ढ्रलोपे–" इत्यत, 'दीर्घ' इति "अङ्गस्य" इति "नोपधायाः" इति च वर्तते विशेषणे तदन्तविधिर्लभ्यमर्थमाह–नान्तस्येति ॥ २ "लोपो व्योः–" इत्यतः 'लोपः' इति वर्ततेऽत आह–लुप्यते इति ॥ तिपा सहचरितस्य सिप एव ग्रहणं न सिच इति 'अभैत्सीन्' इति सिचः सकारस्य लोपो नेति बोध्यम् ॥ ३ "पदस्य" इत्यधिक्रियते तत्र 'प्रातिपदिक' इति लुप्तषष्ठ्यन्त विशेषणम् । इत्याह–प्रातिपदिकसंज्ञकमित्यादि ॥ ४ "इतोत्सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इति "गोतो णित्" इत्यत 'णित्' इति, च वर्ततेऽत आह–सर्वनामस्थानमित्यादि ॥ ५ "अङ्गस्य" इत्यधिक्रियते+"मृजेर्वृद्धिः" इत्यतः 'वृद्धिः' इति वर्ततेऽत आह–अजन्ताङ्गस्येति । ६ "कृतयणादेशयोर्ह्रस्वदीर्घयोरनुकरणं व्यत्य इति । "एङः पदान्तात्–" इत्यतः 'अति' इति, "ङसिङसोश्च" इति "ऋत उत्" इत्यतः 'उत्' इति वर्ततेऽत आह–खितिशब्दाभ्यामिति ॥

[१]सिङसोरत ङः । सख्युः ॥ **औत् ७।३।११८॥** इतः परस्य ङेरौत् । सख्यौ । शेषं हरिवत् ॥ **पतिः समास एव १।४।८॥** [२]घिसंज्ञः । पत्ये । पत्युः २ । पत्यौ । शेषं हरिवत् । समासे तु भूपतये । कतिशब्दो नित्यं बहुवचनान्तः ॥ **बहुगणवतुडति संख्या १।१।२३॥ डति च १।१।२५॥** [३]डत्यन्ता संख्या षट्संज्ञा स्यात् । **षड्भ्यो लुक् ७।१।२२॥** [४]जश्शसोः ॥ **प्रत्ययस्य लुक्श्लुलुपः १।१।६१॥** लुक्[५]श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं स्यात् ॥ **प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२॥** प्रत्यये लुप्ते तदाश्रितं कार्य्यं स्यात् । इति जसि चेति गुणे प्राप्ते । **न लुमताऽङ्गस्य १।१।६३॥** लु[६]मता शब्देन लुप्ते तन्निमित्तमंगकार्यं न स्यात् । कति २ । कतिभिः ।

---

१ "ङेराम्" इत्यतः 'ङेः' इति "इदुद्भ्याम्" इति चानुवर्ततेऽत आह–इत इत्यादि ॥ अत्रौकारानुवृत्तेः फलाभावादिति भावः ॥ २ "शेषो घ्यसखि" इत्यतः 'घि' इति अनुवर्ततेऽत आह–घिसंज्ञ इति ॥ ३–"बहुगण–" इत्यतः 'संख्या' इति, "ष्णान्ता–" इत्यतः 'षट्' इति, च वर्तते विशेषणे तदन्तविधिरत आह–डत्यन्तेति ॥ ४ "जश्शसोः शि" इत्यतः 'जश्शसोः' इति वर्ततेऽत आह जश्शसोरिति ॥ ५ "न लुमताङ्गस्य" इति सूत्रे लुमताग्रहणसामर्थ्यात् तद्भावितग्रहणं "अदर्शनं लोपः" इत्यतः 'अदर्शनम्' इति वर्ततेऽत आह–लुक्श्लुलुप्शब्दैरिति ॥ ६ "प्रत्ययलोपे प्रत्ययलक्षणम्" इत्यनुवर्ततेऽत आह–लुमतेति ॥

क्तिभ्यः२ [१]कतीनाम् । कतिषु । युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपाः।
त्रिशब्दो नित्य बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २॥
**त्रेस्त्रयः ७।१।५३ ॥** त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् ।
त्रिषु । गौणत्वेपि प्रियत्रयाणाम् ॥ **त्यदादीनामः ७।२।१०२ ॥**
एषामकारो [२]विभक्तौ । ( द्विपर्य्यन्तानामेवेष्टिः ) । द्वौ । द्वौ । द्वाभ्याम्
३। द्वयोः २। पाति लोकमिति पपीः सूर्यः ॥ **दीर्घाज्जसि च ६।१।१०५ ॥** दीर्घाज्जसि इचि [३]च परे न पूर्वसवर्णः। पप्यौ । पप्यः । हे
पपीः । पपीम् । पपीन् । पप्या । पपीभ्याम् ३। पपीभिः । पप्ये । पपीभ्यः २ । पप्यः । पप्योः । दीर्घत्वान्न नुट् पप्याम् । ङौ तु सवर्णदीर्घः पपी । पप्योः । पपीषु । एवं वातप्रम्यादयः । बह्व्यः श्रेयस्यो
यस्य स बहुश्रेयसी ॥ **यू स्त्र्याख्यौ नदी १।४।३॥** ईदूदन्तौ
नित्यस्त्रीलिङ्गौ नदीसञ्ज्ञौ स्तः ( प्रथमलिंगग्रहण च ) । पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्यर्थः ॥ **अम्बार्थनद्योर्ह्रस्वः ७।३। १०७ ॥** [४]सम्बुद्धौ । हे बहुश्रेयसि ॥ **आण्नद्याः ७।३।**

१ "आमि सर्वनाम्न –" इत्यत 'आमि' इत्यनुवर्ततेऽत आह–आमीति ॥
२"अष्टन आ विभक्तौ" इत्यत 'विभक्तौ'इति वर्ततेऽत आह–विभक्ताविति॥
३ "प्रथमयोः पूर्वसवर्णः" इति"नादिचि" इत्यत 'न' इति
'इचि' इति च वर्ततेऽत आह–इचि चेत्यादि ॥ ४ "सम्बुद्धौ च" इत्यतः
' सम्बुद्धौ इति वर्ततेऽत आह–सम्बुद्धाविति ॥

११२ ॥ नेद्यन्तात्परेषां ङितानाडागमः ॥ **आटश्च ६।१।९० ॥** आटोचि[2] परे वृद्धिरेकादेशः । बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेयसीनाम् ॥ **ङेराम्नद्याम्नीभ्यः ७।३।११६ ॥** नेद्यन्तादाबन्तान्नीशब्दाच्च परस्य ङेराम् । बहुश्रेयस्याम् । शेषं पपीवत् ॥ अङ्यन्तत्वान्न सुलोपः । अतिलक्ष्मीः । शेषं बहुश्रेयसीवत् । प्रधीः ॥ **अचि-श्नुधातुभ्रुवां य्वोरियङुवङौ ६।४।७७ ॥** श्नुप्रत्ययान्तस्येवर्णोवर्णान्तस्य धातोर्भ्रू इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ[4] प्रत्यये परे । इति प्राप्ते ॥ **एरनेकाचोऽसंयोगपूर्वस्य ६।४।८२ ॥** धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यणजादौ प्रत्यये । प्रध्यौ । प्रध्यम् । प्रध्यो । प्रध्यः । प्रध्यि । शेषं पपीवत् । एवं ग्रामणीः । ङौ तु ग्रामण्याम् । अनेकाचः किम् । नीः । नियौ । नियः । अमि शसि च परत्वादियङ्

---

१ "अंगस्य" इत्यधिकृतम् । तद्विशेषणे तदन्तविधिः "घेर्ङिति" इत्यतः 'ङिति' इति षष्ठीविपरिणतमनुवर्ततेऽत आह-**नद्यन्तादिति** ॥ २ "इकोयणचि" इत्यतः 'अचि' इति, "वृद्धिरेचि" इत्यत. 'वृद्धि' इति, "एकः पूर्वपरयोः" इत्यधिक्रियतेऽत आह-**अचीत्यादि** ॥ ३ "अंगस्य" इत्यधिक्रियते । विशेषणे तदन्तविधिरित्याह-**नद्यन्तादित्यादि** ॥ ४ "अंगस्य" इत्यधिकारलब्धप्रत्ययविशेषणे तदादिविधिरित्याह-**अजादाविति** ॥ ५ "अगस्य" इत्यधिक्रियते एकदेशानुवृत्त्या 'धातोः' इति वर्तते 'अचि' इति च ॥ तद्विशेषणे 'एः' इत्यत्र तदन्तविधि· तद्विशेषणे 'असयोगपूर्वस्य' इति बहुव्रीहौ सयोगश्चोपस्थितत्वात्सान्निहितत्वाद् धात्ववयव एव गृह्यते । "इणो यण्" इत्यतः 'यण्' इति वर्ततेऽत आह-**धात्ववयवेति** ॥

नियम् । डेराम् । नियाम् ॥ असयोगपूर्वस्य किम् । सुश्रियौ । यव-क्रियौ ॥ **गतिश्च १।४। ६०** ॥ प्रादय: क्रियायोगे गतिसञ्ज्ञा: स्युः[1] । ( गतिकारकेतरपूर्वपदस्य यण् नेष्यते ) शुद्धधियौ ॥ **न भूसु-धियो: ६।४। ८५** ॥ एतयोरचि[2] सुपि यण्न । सुधिय इत्यादि ॥ सुखमिच्छतीति सुखी: । सुती: । सुख्यौ । सुत्यौ । सुख्युः[3] । सुत्युः । शेप प्रधीवत् ॥ शम्भुर्हरिवत् ॥ एव भान्वादय: ॥ **तृज्वत्क्रोष्टुः ७।१। ९५** ॥ असम्बुद्धौ[4] सर्वनामस्थाने परे । क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्द: प्रयोक्तव्य इत्यर्थ: ॥ **ऋतो ङिसर्वनामस्था-नयो: ७।३।११०** ॥ ऋतोऽङ्गस्य गुणो[5] ङौ सर्वनामस्थाने च । इति प्राप्ते ॥ **ऋदुशनस्पुरुदंसोऽनेहसां च ७।१।९४** ॥ ऋदन्तानामुशनसादीनां चानङ्[6] स्यादसबुद्धौ सौ । **अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम् ६।३।११** ॥

---

१ "प्रादय" इति सूत्रात् 'प्रादय, क्रियायोगे' इत्यनुवर्त्याह--**प्रादय इति** ॥ २ "अचिश्नु–" इत्यतः 'अचि' इति "इणो यण्" इत्यत. 'यण्' इति, "ओ सुपि" इत्यत. 'सुपि' इति वर्ततेऽत आह–**अचि सुपीति-अजादावित्यर्थः** ॥ ३ "ख्यत्यात्–" इत्यत्र दीर्घसग्रहफलकक्तयणादेशफल-माह–**सुख्युः । सुत्युरिति**॥ ४ "इतोऽत्सर्वनामस्थाने" इत्यत. 'सर्वनामस्थाने' इति "सख्युरसबुद्धौ" इत्यतः 'असबुद्धौ' इति वर्ततेऽत आह--**असबुद्धा-वित्यादि** ॥ ५ "ह्रस्वस्य गुण" इत्यत 'गुण.' इति वर्ततेऽते आह–**गुण इत्यादि** ॥ ६ "अनङ् सौ" इति "सख्युरसबुद्धौ" इत्यतः "असबुद्धौ" इति च वर्तते ॥

अवादीनामुपधाया दीर्घोऽसंबुद्धौ सर्वनामस्थाने। क्रोष्टा । क्रोष्टारौ। क्रोष्टारः । क्रोष्टून् ॥ **विभाषा तृतीयादिष्वचि ७।१।९१॥** अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत् । क्रोष्ट्रा । क्रोष्ट्रे ॥ **ऋत उत् ६।१।१११॥** ऋतो ङसिङसोरति उदेकादेशः । रपरः । **रात्सस्य ८।२।२४ ॥** रेफात्सयोगान्तस्य सस्यैव लोपो नान्यस्य। रस्य विसर्गः । क्रोष्टुः २ क्रोष्ट्रोः २ । ( नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन ) क्रोष्टूनाम् । क्रोष्टरि । पक्षे हलादौ च शम्भुवत् ॥ हूहूः । हूह्वौ । हूह्वः । हूहूम् इत्यादि ॥ अतिचमूशब्दे तु नदीकार्य्यं विशेषः । हे अतिचमु । अतिचम्वै । अतिचम्वाः । अतिचमूनाम् ॥ खलपूः । **ओः सुपि ६।४।८३ ॥** धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादचि सुपि ।

---

१ "ढ्रलोपे–" इत्यतो 'दीर्घः' इति, "नोपधायाः" इत्यत 'उपधायाः' इति, "सर्वनामस्थाने चासंबुद्धौ" इति च वर्ततेऽत आह–**उपधाया इत्यादि** ॥ २ "तृज्वत्क्रोष्टुः" इति सूत्र वर्तते विशेषणे तदादिविधिरित्याह–**अजादिष्विति** ॥ ३ "एङः पदान्ता–" इत्यत. 'अति' इति, "ङसिङसोश्च" इति, "एकः पूर्वपरयो" इति च वर्ततेऽत आह–**ङसिङसोरित्यादि** ॥ ४ "संयोगान्तस्य लोप." इति वर्तते । तथा च संयोगान्तत्वेनैव लोपे सिद्धे सूत्रं नियमार्थमितरव्यावृत्त्यर्थमित्याह–**नान्यस्येति** ॥ ५ "अङ्गस्य" इत्यधिक्रियते । "अचिश्नु–" इत्यत 'अचि' इति 'धातु' इति, "इणो यण्" इत्यत 'यण' इति, "एरनेकाचोऽसंयोग–" इत्यतः 'असंयोगपूर्वस्य' 'अनेकाचः' इति च वर्ततेऽत आह–**धात्ववयवेति** ॥

खलप्वौ। खलप्वः। एवं सुल्वादयः। स्वभूः। स्वभुवौ। स्वभुवः॥ वर्षाभूः। **वर्षाभ्वश्च ६।४।८४॥** अस्य यण् स्यादचि सुपि। वर्षाभ्वावित्यादि॥ दृन्भूः। (दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः) दृन्भ्वौ। एवं करभूः॥ धाता। हे धातः। धातारौ। धातारः। (ऋवर्णान्नस्य णत्वं वाच्यम्) धातॄणाम्। एवं नप्त्रादयः॥ नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेनेह न। पिता। पितरौ। पितरः। पितरम्। शेषं धातृवत्॥ एवं जामात्रादयः॥ ना नरौ॥ **नृ च ६।४।६॥** अस्य नामि वा दीर्घः। नृणाम्। नॄणाम्॥ **गोतो णित् ७।१।९०॥** ओकाराद्विहितं सर्वनामस्थानं णिद्वत्। गौः। गावौ। गावः। **औतोऽम्शसोः ६।१।९३॥** औतोऽम्शसोरचि आकार एकादेशः। गाम्। गावौ। गाः। गवा। गवे। गोः इत्यादि॥ **रायो हलि**

---

१ 'यण्' 'अचि' 'सुपि' इति वर्तनेऽत आह–**यण् स्यादिति**॥ २ "उणादिनिष्पन्नानां तृच्तृन्प्रत्ययान्तानां संज्ञाशब्दानां चेदुपधादीर्घस्तर्हि नप्त्रादीनामेव" इति नियमार्थम्॥ ३ "ढ्रलोपे–" इत्यतः 'दीर्घः' इति "नामि" इति "छन्दस्युभयथा" इत्यत 'उभयथा' इति वर्ततेऽत आह–**नामि वेति**॥ ४ "इतोऽत् सर्वनामस्थाने" इत्यत 'सर्वनामस्थाने' इति वर्तते तकारस्त्वविवक्षित। इत्यभिप्रेत्याह–**ओकारादित्यादि**॥ ५ 'आ, ओत' इति च्छेदः। "इको यण–" इत्यत 'अचि' इति। "एकः पूर्वपरयोः" इति च वर्ततेऽत आह–**औतोऽमिति**॥

७।२।८५ ॥ अस्याकारादेशो हलि विभक्तौ । राः । रायौ । रायः । राभ्यामित्यादि ॥ ग्लौः । ग्लावौ । ग्लावः । ग्लौभ्यामित्यादि ॥

इत्यजन्तपुंल्लिङ्गाः ॥

---

रमा । **औङ आपः ७।१।१८ ॥** आबन्तादङ्गात्परस्यौङः शी स्यात् । औङित्यौकारविभक्तेः संज्ञा । रमे । रमाः ॥ **सम्बुद्धौ च ७।३।१०६ ॥** आप एकारः स्यात्सम्बुद्धौ । एङ्ह्रस्वादिति संबुद्धिलोपः । हे रमे । हे रमे । हे रमाः । रमाम् । रमे । रमाः ॥ **आङि चापः ७।४।१०५ ॥** आङि ओसि चाप एकारः । रमया । रमाभ्याम् । रमाभिः ॥ **याडापः ७।३।११३ ॥** आपो ङितो याट् । वृद्धिः । रमायै । रमाभ्याम् । रमाभ्यः । रमायाः । रमयोः । रमाणाम् । रमायाम् । रमासु । एवं दुर्गाम्बिकादयः ॥ **सर्वनाम्नः स्याड्ढ्रस्वश्च ७।३।११४ ॥** आबन्तात्सर्वनाम्नो ङितः स्याट् स्यादापश्च ह्रस्वः ।

---

१ "अष्टन आ विभक्तौ" इत्यत 'आ' 'इति' विभक्तौ' इति च वर्ततेऽत आह-**आकारादेश इति**॥ २ "जशः शी" इत्यनः 'शी' इति वर्ततेऽत आह-**शीति**॥ ३ "बहुवचने झल्येत्" इत्यत 'एत्' इति वर्तते "आङि चाप" इत्यत 'आप' इति चात आह-**आप इत्यादि** ॥ ४ "बहुवचने झल्येत्" इत्यत 'एत्' इति वर्तते "ओसि च" इति सूत्रं चात आह-**ओसि चेत्यादि** ॥ ५ "घेर्ङिति" इत्यतो 'ङिति' इति वर्ततेऽत "आह-**ङितो याडिति**" ६ "घेर्ङिति" इत्यतः 'ङिति' इति, "याडाप" इत्यत. 'आप' इति च वर्तते विशेषणे तदन्तविधिरत आह-**आबन्तादिति** ॥

सर्वस्यै । सर्वस्याः । सर्वासाम् । सर्वस्याम् । शेषं रमावत् ॥ एवं विश्वादय आबन्ताः ॥ **विभाषा दिक्समासे बहुव्रीहौ १।१।२८ ॥** सर्वनामता वा । उत्तरपूर्वस्यै, उत्तरपूर्वायै । तीयस्येति वा सर्वनामसञ्ज्ञा । द्वितीयस्यै, द्वितीयायै ॥ एवं तृतीया ॥ अम्बार्थेति ह्रस्वः । हे अम्ब । हे अक्क । हे अल्ल ॥ जरा । जरसौ इत्यादि । पक्षे रमावत् ॥ गोपाः विश्वपावत् । मतीः । मत्या ॥ **ङिति ह्रस्वश्च १।४।६ ॥** इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ ह्रस्वौ चेवर्णोवर्णौ स्त्रियां वा नदीसञ्ज्ञौ स्तो ङिति । मत्यै, मतये । मत्याः २ । मतेः २ ॥ **इदुद्भ्याम् ७।३।११७॥** इदुद्भ्यां नदीसञ्ज्ञकाभ्यां परस्य ङेराम् । मत्याम्, मतौ । शेषं हरिवत् ॥ एवं बुद्ध्यादयः॥ **त्रिचतुरोः स्त्रियां तिसृचतसृ ७।२।९९॥** स्त्रीलिङ्गयोरेतौ स्तो विभक्तौ॥ **अचि र ऋतः ७।२।१००॥** तिसृचतसृ एतयोर्ऋकारस्य रेफादेशः स्यादचि । गुणदीर्घोत्वानामपवादः ।

---

१ "सर्वादीनि–" इत्यतः 'सर्वनामानि' इति वर्ततेऽत आह–**सर्वनामतेति** ॥ २ 'अम्बार्थ द्व्यक्षरं यदि' इति भाष्यवार्तिकाद् द्व्यच्केष्वेवास्य प्रवृत्तिरित्युदाहरणेन दर्शयति–**हे अम्ब इत्यादि** ॥ ३ "नेयङुवङ्स्थानावस्त्री" इति, "यू स्त्र्याख्यौ नदी" इति, "वामि" इत्यत 'वा' इति वर्ततेऽत आह–**इयङुवङित्यादि** ॥ ४ "ङेराम्नद्याम्–" इत्यतो 'ङेराम्' नदीति वर्तते न त्वाबूनीग्रहणम् अयोग्यत्वात् इत्याह–**नदीसञ्ज्ञकाभ्यामिति** ॥ ५ "अष्टन आ–" इत्यत 'विभक्तौ' इति वर्ततेऽतआह–**विभक्ताविति** ॥ ६ "त्रिचतुरो–" इत्यत 'तिसृचतसृ' इति षष्ठीविपरिणतमनुवर्तते ऽत आह–**तिसृचतसृ एतयोरिति** ॥ ७ 'तिसृ' इति प्रथमायाम् "ऋतो ङि"–

तिस्रः । तिस्रः । तिसृभिः । तिसृभ्यः । तिसृभ्यः । आमि नुट् ॥ **न तिसृचतसृ ६।४।४॥** एतयोर्नामि दीर्घो न । तिसृणाम् । तिसृषु ॥ द्वे । द्वे । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः ॥ गौरी । गौर्यौ । गौर्यः। हे गौरि । गौर्य्यै इत्यादि । एवं नद्यादयः॥ लक्ष्मीः। शेषं गौरीवत् ॥ एवं तरीतन्त्र्यादयः ॥ स्त्री । हे स्त्रि । **स्त्रियाः ६।४।७९ ।** अस्येयङ् स्यादजादौ प्रत्यये परे । स्त्रियौ । स्त्रियः **वाम्शसोः ।६।४।८०॥** अमि शसि च स्त्रिया इयङ् वा स्यात् । स्त्रियम्, स्त्रीम् । स्त्रियः, स्त्रीः । स्त्रिया । स्त्रियै । स्त्रियाः । परत्वान्नुट् । स्त्रीणाम् । स्त्रीषु ॥ श्रीः । श्रियौः । श्रियः ॥ **नेयङुवङ्स्थानावस्त्री १।४।४॥** इयङुवङोः स्थितिर्ययोस्तावीदूतौ नदीसञ्ज्ञौ न स्तो न तु स्त्री । हे श्रीः । श्रियै, श्रिये । श्रियाः, श्रियः ॥ **वामि १।४।५ ॥**

—इति प्राप्तं "जसि च" इति वा प्राप्तं गुणम्, 'तिस्र' इति द्वितीयायां "प्रथमयोः पूर्वसवर्णः" इति प्राप्तं दीर्घम्, प्रियतिस्र. इत्यादौ "ऋत उत" इति प्राप्तम् उत्त्वं च बाधते इत्यर्थः ॥

---

१ एतदारम्भसामर्थ्याद् रादेशाभावे सति नुटि सिद्धे "नुमचिर–" इति वार्तिके अचिरग्रहणं न कर्तव्यं भवति ॥ २ "नामि" इति 'दीर्घ' इति च वर्तते । तिसृचतसृ इति लुप्तषष्ठ्यन्तमित्याह एतयोरिति ॥ ३ "अचि श्नुधातु–" इत्यतो योग्यतया 'इयङ्' इति 'अचि' इति च वर्तते अङ्गाधिकारलब्धप्रत्ययस्य विशेषणे तदादिविधिरित्याह–इयङित्यादि ॥ ४ "स्त्रियाः" इति सूत्रं सानुवृत्तमनुवर्ततेऽत आह–स्त्रिया इत्यादि ॥ ५ "यू स्त्र्याख्यौ नदी" इति वर्ततेऽत आह–ईदूतावित्यादि ॥

इयङुवङ्स्थानौ स्त्र्याख्यौ यू आमि वा नदीसंज्ञौ स्तो न तु स्त्री । श्रीणाम्, श्रियाम् । श्रियि, श्रियाम् ॥ धेनुर्मतिवत् ॥ **स्त्रियां च ७।१।९६॥** स्त्रीवाची क्रोष्टुशब्दस्तृजन्तवद्रूपं लभते । **ऋन्नेभ्यो ङीप् ४।१।५॥** ऋदन्तेभ्यो नान्तेभ्यश्च स्त्रियां ङीप् । क्रोष्ट्री गौरीवत् ॥ भ्रूः श्रीवत् ॥ स्वयम्भूः पुंवत् ॥ **न षट्स्वस्रादिभ्यः ४।१।१०॥** ङीप्टापौ न स्तः । स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा । याता मातेति सप्तैते स्वस्रादय उदाहृताः ॥ स्वसा । स्वसारौ ॥ माता पितृवत् । शसि मातॄः ॥ द्यौर्गोवत् ॥ राः पुंवत् ॥ नौर्ग्लौवत् ॥

इत्यजन्तस्त्रीलिङ्गाः ॥

---

**अतोऽम् ७।१।२४॥** अतोऽङ्गात् क्लीबात्स्वमोरम् । अमि पूर्वः । ज्ञानम् । एङ्ह्रस्वादिति हल्लोपः । हे ज्ञान ॥ **नपुंसकाच्च ७।१।१९॥**

---

१ "नेयङुवङ्स्थानावस्त्री" इति वर्तते निषेधविकल्पस्यापि विधिविकल्पे पर्यवसानमित्याह-इयङुवङ्स्थानावित्यादि ।" २ "तृज्वत्क्रोष्टुः" इति वर्ततेऽत आह-क्रोष्टुशब्द इति ॥ ३ "स्त्रियाम्" इत्यधिक्रियते प्राति-पदिकादिति च, तद्विशेषणत्वेन तदन्तविधिरित्याह-ऋदन्तेभ्य इत्यादि ॥ ४ "स्त्रियाम्" इत्यधिकृतम् । तथा च 'स्त्रिया यद् विहितं तन्न' इत्यर्थफलितमाह-ङीप्टापौ नेति ॥ ५ "अचि र ऋतः" "न तिसृचतसृ" इति सूत्रे अपि तिसृचतस्रोः स्वस्रादित्वकल्पनायामेव ज्ञापके सम्भवतः ॥ ६ "स्वमोर्नपुंसकात्" इति वर्तते 'अङ्गात्' इति चात आह-अङ्गात् क्लीबात् स्वमोरिति ॥ ७सम्बुद्ध्योपस्थितस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणकरणे फलमाह-हे ज्ञानेति॥

क्लीबादौङः शी स्यात् । भसंज्ञायाम् । **यस्येति च ६।४।१४८ ॥** ईकारे तद्धिते च परे भस्येवर्णावर्णयोर्लोपः । इत्यल्लोपे प्राप्ते ( औङः श्यां प्रतिषेधो वाच्यः ) ज्ञाने ॥ **जश्शसोः शिः ७।१।२० ॥** क्लीबादनयोः शिः स्यात् । **शि सर्वनामस्थानम् १।१।४२ ॥** शि इत्येतदुक्तसंज्ञं स्यात् । **नपुंसकस्य झलचः ७।१।७२॥** झलन्तस्याजन्तस्य च क्लीबस्य नुम् स्यात् सर्वनामस्थाने ॥ **मिदचोऽन्त्यात्परः १।१।४७ ॥** अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात् । उपधादीर्घः । ज्ञानानि । पुनरतद्वत् । शेषं पुंवत् ॥ एवं धनवनफलादयः ॥ **अद्ड्डतरादिभ्यः पञ्चभ्यः ७।१।२५ ॥** एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात् । **टेः ६।४।१४३॥** डिति भस्य टेर्लोपः । कतरत्, कतरद् । कतरे । कतराणि । हे कतरत् । शेषं पुंवत् ॥ एवं कतमत् । इतरत् । अन्यत् । अन्यतरत् । अन्यतमस्य त्वन्य

---

१ "जसः शी" इत्यत 'शी' इति, "औङ आपः" इत्यत 'औङ' इति च वर्ततेऽत आह—औङ इति ॥ २ नपुंसकत्वेन औङः सर्वनामस्थानत्वाभावाद् "यचि भम्" इति भसंज्ञायामित्यर्थः ॥ ३ "नस्तद्धिते" इत्यत 'तद्धिते' इति, 'भस्य' इति च वर्तते 'लोप' इति चात आह—तद्धिते चेत्यादि ॥ ४ "नपुंसकाच्च" इत्यतो 'नपुंसकात्' इति वर्ततेऽत आह—क्लीबादिति ॥ ५ "इदितो नुम्—" इत्यत 'नुम्' इति वर्तते "उगिदचां सर्वनामस्थाने—" इत्यत 'सर्वनामस्थाने' इति चात आह—नुम्स्यादित्यादि ॥ ६ "स्वमोर्नपुंसकात्" इति वर्ततेऽत आह—क्लीबेभ्य इत्यादि ॥ ७ 'भस्य' इत्यधिक्रियते "तिविंशतेर्डिति—" इत्यतः 'डिति' इति 'लोप' इति च वर्तते, अत आह—डिति भस्येति ॥

राममिन्येव । ( एकतरात्प्रतिषेधो वक्तव्यः ) एकतरम् ॥ **ह्रस्वो नपुंसके प्रातिपदिकस्य १।२।४७ ॥** अजन्तस्येत्येव । श्रीप ज्ञानवत् ॥ **स्वमोर्नपुंसकात् ७।१।२३ ॥** लुक् स्यात् । वारि । **इकोऽचि विभक्तौ ७।१।७३॥** इगन्तस्य क्लीबस्य नुमचि विभक्तौ । वारिणी । वारीणि । न लुमतेत्यस्यानित्यत्वात्पक्षे संबुद्धिनिमित्तो गुणः । हे वारे, हे वारि । घेर्ङितीति गुणे प्राप्ते ( वृद्ध्यौत्त्वतृज्वद्भावगुणेभ्यो नुम् पूर्वविप्रतिषेधेन ) वारिणे । वारिणः । वारिणोः । नुमचिरेति नुट् । वारीणाम् । वारिणि । हलादौ हरिवत् ॥ **अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः ७।१।७५ ॥** एषामनङ् स्याट्टादावचि । **अल्लोपोऽनः ६।४।१३४ ॥** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपः । दध्ना । दध्ने । दध्नः ।

---

१ अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते ॥ २ अद्‌डादेशस्येति भाव. ॥ ३ ह्रस्वपदश्रुत्योपस्थितस्याच्पदस्य विशेषणत्वेन तदन्तविधिरित्याह--अजन्तस्येति ॥ ४ " षड्भ्यो लुग्" इत्यतो ' लुग्' इति वर्तते "जश्शसो शि." इत्यत जश्शसोरिति वर्तते ॥५ " इदितो नुम्--" इत्यतो 'नुम्' इति वर्तते "नपुसकस्य झलच" इत्यत । ' नपुसकस्य ' इति च तद्विशेषणत्वेन तदन्तविधि ।इत्यत आह--इगन्तस्येति ॥ ६ अस्यानित्यत्वे ज्ञापकं "इकोऽचि" इति सूत्रे ' अचि ' ग्रहणमेव ॥ ७ तथा चोक्तं भाष्ये--'इह किंचित् 'त्रपो' इति ' इति ॥ ८ "इकोचि विभक्तौ" इत्यतः ' अचि' इति, " तृतीयादिषु भाषितपुंस्कम्--" इत्यतः 'तृतीयादिषु' इति वर्तते अत आह--टादावचीति॥ ९ "अङ्गस्य" "भस्य" इत्यधिकारद्वयफलितमर्थमाह--अङ्गावयव इत्यादि ॥

दध्नः । दध्नोः । दध्नोः ॥ **विभाषा ङिश्योः ६।४।१३६ ॥** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽन् तस्याकारस्य लोपो वा स्यात् ङिश्योः परयोः । दध्नि, दधनि । शेषं वारिवत् ॥ एवमस्थि-सक्थ्यक्षि ॥ सुधि । सुधिनी । सुधीनि । हे सुधे, हे सुधि । **तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ७।१।७४ ॥** प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं क्लीबं पुंवद्वा टादावचि । सुधिया, सुधिनेत्यादि ॥ मधु । मधुनी । मधूनि । हे मधो, हे मधु ॥ सुलु । सुलुनी । सुलूनि । सुलुनेत्यादि । धातृ । धातृणी । धातॄणि । हे धातः, हे धातृ । धातॄणाम् । एवं ज्ञात्रादयः ॥ **एच इग्घ्रस्वादेशे १।१।४८ ॥** आदिश्यमानेषु ह्रस्वेषु मध्ये एच इगेव स्यात् । प्रद्यु प्रद्युनी । प्रद्यूनि । प्रद्युनेत्यादि ॥ प्ररि । प्ररिणी । प्ररीणि । प्ररिणा । एकदेशविकृतमनन्यवत् । प्रराभ्याम् । प्ररीणाम् । सुनु । सुनुनी । सुनूनि । सुनुनेत्यादि ॥

इत्यजन्तनपुंसकलिङ्गाः ॥

**हो ढः ८।२।३१॥** हस्य ढः स्याज्झलि पदान्ते च । लिट्, लिड् ॥

---

१ "अल्लोपोऽनः" इति सूत्रविहितस्यैव कार्यस्य विकल्प इति भावः ॥ २ "इकोचि विभक्तौ" इति वर्तते । भाषितः पुमान् यस्मिन्नर्थे इति भाषितपुंस्कं प्रवृत्तिनिमित्तम्, तद् अस्ति अस्य तद्भाषितपुंस्कम् इति वृत्तिद्वयफलितमर्थमाह–प्रवृत्तिनिमित्तैक्य इत्यादि ॥ 'यन्निमित्तमुपादाय पुंसि शब्दः प्रवर्तते । क्लीबवृत्ति तदेव स्यादुक्तपुंस्कं तदुच्यते॥' ३ "पदस्य" इत्यधिकृतम्, "झलो झलि" इत्यतः 'झलि' इति वर्तते अत आह–झलि पदान्ते इति ॥

हौ । लिहः । लिड्भ्याम् । लिट्सु, लिट्त्सु ॥ **दादेर्धातोर्घः ८।२।३२॥** झलि पदान्ते चोपदेशे दादेर्धातोर्हस्य घः । **एकाचो बशो भष् झषन्तस्य स्ध्वोः ८।२।३७ ॥** धात्ववयवस्यैकाचो झषन्तस्य बशो भष् से ध्वे पदान्ते च । धुक्, । धुग् । दुहौ । दुहः । धुग्भ्याम् । धुक्षु ॥ **वा द्रुहमुहष्णुहष्णिहाम् ८।२।३३॥** एषां हस्य वा घो झलि पदान्ते च । ध्रुक्; ध्रुग्, ध्रुट्; ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्याम, ध्रुड्भ्याम् । ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु ॥ एव मुक्, मुग् । इत्यादि ॥ **धात्वादेः षः सः ६।१।६४ ॥** स्नुक्, स्नुग्, स्नुट्, स्नुड् । एवं स्निक्,स्निग्;स्निट्,स्निड् ॥ विश्ववाट् विश्ववाड् । विश्ववाहौ । विश्ववाहः । विश्ववाहम् । विश्ववाहौ॥**इग्यणः संप्रसारणम् १।१।४५ ॥** यणः स्थाने प्रयुज्यमानो य इक् स सप्रसारणसंज्ञः स्यात् ॥ **वाह ऊठ् ६।४।१३२ ॥** भस्य वाहः सप्रसारणमूठ्॥**संप्रसारणाच्च ६।१।१०८ ॥** सप्रसारणादचि पूर्व-

---

१ "हो ढः" इत्यत 'ह.' इति वर्तते।'दादिपर चोपदेशिकदादिपरम्' । इत्याह झलीति॥२ "दादेर्धातो·"इत्यतोऽनुवृत्त धातुपद वैयधिकरण्येन"एकाचः"इत्यनेनान्वेति। "पदस्य"'इत्यधिकृतम्।'झलि' इति तु निवृत्तम्'स्ध्वो·'ग्रहणसामर्थ्यात् इत्यभिप्रेत्याह–धात्ववयवस्येति॥३"दादेर्धातो–"इति सूत्राद्'घ' इति वर्तते। तथा च द्रुहंशे प्राप्तविभाषा इतरत्र त्वप्राप्तविभाषा इति भाव ॥४"भस्य" इत्यधिकृत'वाह 'इत्यस्य विशेषणम्। " वसो संप्रसारणम् " इत्यतः 'संप्रसारणम्' इति वर्ततेऽतआह–भस्येति ॥ ५"इको यणचि" इत्यत. 'अचि' "एकः पूर्वपरयोः" इति"अमि पूर्व." इत्यत 'पूर्व.'इति च वर्तते इति मनसि कृत्वैवाह–अचीति ॥

रूपमेकादेशः । एत्येधत्यूठ्स्विति वृद्धिः । विश्वौहः इत्यादि ॥ **चतुरनडुहोरामुदात्तः ७।१।९८॥** अनयोराम् स्यात्सर्वनामस्थाने परे। **सावनडुहः ७।१।८२ ॥** अस्य नुम् स्यात् सौ परे । अनड्वान् ॥ **अम् संबुद्धौ ७।१।९९ ॥** हे अनड्वन् । हे अनड्वाहौ । हे अनड्वाहः। अनडुहः । अनडुहा ॥ **वसुस्रंसुध्वंस्वनडुहां दः ८।२।७२ ॥** सान्तवस्वन्तस्य स्रंसादेश्च दः स्यात्पदान्ते । अनडुद्भ्यामित्यादि । सान्तेति किम्—विद्वान् । पदान्ते किम्—स्रस्तम् । ध्वस्तम्॥ **सहेः साडः सः ८।३।५६ ॥** साड्रूपस्य सहेः सस्य मूर्धन्यादेशः । तुराषाट्, तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यामि-

---

१ "इतोऽत्सर्वनाम-"इत्यत 'सर्वनामस्थाने' इति वर्ततेऽत आह—**सर्वनामस्थान इति**॥ २"आच्छीनद्योः-"इत्यत—'आत्, नुम्' इति वर्तते ।"शप्श्यनोः-" इत्यतः 'नित्यम्' इति च ॥ "मिदचोऽन्त्यात्परः" इति परिभाषोपस्थानात् 'अनडुहोऽचाम स्यादवर्णरूपादच' परस्तस्यैवान्तावयवो नुम् मित् स्यादित्यर्थस्वीकारेणाय नुम् आमागमसमागममन्तरा नैव प्राप्नोतीति विशेषविहितोप्ययमामागम न बाधते नाप्ययमागमेन बाध्यते इत्यभिप्रेत्योदाहरिष्यति अनड्वानिति ॥ अत आह—**नुमिति** ॥ ३ "चतुरनडुहोरामुदात्त." इत्यतः 'चतुरनडुहो' इति वर्तते ॥ ४ "पदस्य" इत्यधिकृतम् । "ससजुषो-" इत्यतः 'स' इत्यनुवर्तते । तच्च 'वसु' इत्यस्यैव विशेषणम् । विद्वान् विद्वन् इत्यत्र व्यभिचारात् विद्वांसः विदुष इत्यादौ संभवात् । न स्रसुन्ध्वस्वोः अव्यभिचारात्, नाप्यनडुहः असंभवात् इत्यभिप्रेत्याह—**सान्तवस्वन्तस्येति** ॥ ५ "अपदान्तस्य मूर्धन्यः" इत्यधिकृतम् ॥

त्यादि ॥ **दिव औत् ७ । १ । ८४ ॥** दिविति प्रातिपदिकस्यौ-त्स्यात्सौ । सुद्यौः । सुदिवौ ॥ **दिव उत् ६।१।१३१॥** दिवोन्ता-देश उकारः स्यात् पदान्ते । सुद्युभ्यामित्यादि ॥ चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः ॥ **षट्चतुर्भ्यश्च ७।१।५५॥** एभ्य आमो नुडागमः ॥ **रषाभ्यां नो णः समानपदे ८ । ४ । १ ॥** ( **अचो रहाभ्यां द्वे ८।४।४३ ॥** अचः पराभ्यां रेफहकाराभ्यां परस्य यरो द्वे वा स्तः।) चतुर्णाम्, चतुर्णाम् ॥ **रोः सुपि ८।३।१६ ॥** रोरेव विसर्गः सुपि । षत्वम् । षस्य द्वित्वे प्राप्ते ॥ **शरोऽचि ८।४।४९ ॥** अचि परे शरो न द्वे स्तः । चतुर्षु ॥ **मो नो धातोः ८।२।६४ ॥** धातोर्मस्य नः पदान्ते । प्रशान् ॥ **किमः कः ७।२।१०३ ॥** किमः कः स्याद्विभक्तौ । कः । कौ । के । इत्यादि । शेषं सर्ववत् ॥ **इदमो मः ७।२।१०८ ॥** सौ त्यदाद्यत्वापवादः ॥

---

१ "सावनडुहः" इत्यतः 'सौ' इति वर्तते। निरनुबन्धकग्रहणे न सानुबन्धकस्य इति निरनुबन्धकस्यौणादिकस्यैवात्र ग्रहणम् न सानुबन्धकस्य धातुपाठसहितस्येत्य-भिप्रेत्याह **दिविति प्रातिपदिकस्येति**॥ २ "एङः पदान्ता-"इति वर्ततेऽतआह-**पदान्त इति**॥ ३ "ह्रस्वनद्यापो नुट्" इत्यतः 'आमः' 'नुट्' इति वर्ततेऽत आह-**आम इति**॥ ४ रेफषकाराभ्या परस्य नस्य णः स्यादेकपदे॥ ५ "खरवसानयो–" इत्यतो विसर्जनीय इति वर्ततेऽत आह–**विसर्ग इति** ॥ ६ "अचो रहाभ्यां–" इत्यतः 'द्वे' इति "नादिन्याक्रोशे–" इत्यतो 'न' इति च वर्ततेऽत आह–**नेत्यादि** ॥ ७ "पदस्य" इत्यधिक्रियते ॥ ८ "अष्टन आ–" इत्यतः 'विभक्तौ' इति वर्तते ॥ ९ "तदोः सः सा–" इत्यतः 'सौ' इति वर्तते ॥

**इदोऽय् पुंसि ७।२।१११ ॥** इदम इदोऽय् सौ पुसि । अयम् । त्यदाद्यत्वे ॥ **अतो गुणे ६।१।९७॥** अपदान्तादतो गुणे पररूपमेकादेशः ॥ **दश्च ७।२।१०९॥** इदमो दस्य मः स्याद्विभक्तौ । इमौ । इमे । त्यदादेः संबोधनं नास्तीत्युत्सर्गः ॥ **अनाप्यकः ७।२।११२॥** अककारस्येदम इदोऽनापि विभक्तौ । आबिति प्रत्याहारः । अनेन ॥ **हलि लोपः ७।२।११३ ॥** अककारस्येदम इदो लोप आपि हलादौ । नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ **आद्यन्तवदेकस्मिन् १।१।२१॥** एकस्मिन्क्रियमाणं कार्यमादाविवान्त इव स्यात् । सुपि चेति दीर्घः । आभ्याम् ॥ **नेदमदसोरकोः ७।१।११ ॥** अककारयोरिदमदसोर्भिस ऐस् न । एभिः । अस्मै । एभ्यः । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । अनयोः । एषु ॥ **द्वितीया-**

---

१ "इदमो मः " इत्यतः ' इदम ' इति । "यः सौ " इत्यतः 'सौ ' इति वर्तते ॥ २ " एङि पररूपम् " इत्यतः 'पररूपम् ' इति "उस्यपदान्ताद् " इत्यतः ' अपदान्तात् ' इति " एकः पूर्वपरयोः " इति च वर्तते ॥ ३ " अष्टनः– " इत्यतो विभक्ताविति, " इदमो मः " इति च वर्तते ॥ ४ उत्सर्ग इति । केवलानां प्रयोगेण विवक्षितसंबोध्यस्य संबोधनासिद्धेः । क्वचित्तु तादृशप्रयोगोपि भवतीति भाष्यदत्तस्य ' हे स ' 'हे असौ' इति प्रयोगस्य नानुपपत्तिः ॥५"इदमो म." इत्यतः 'इदम.' इति, "इदोऽय्–" इत्यत. 'इद ' इति "अष्टन आ–" इत्यतो 'विभक्तौ' इति च वर्तते ॥ ६ प्रत्याहार इति । 'टा' इत्याकारमारभ्य सुपः पकारपर्यंत 'आप्' इति प्रत्याहारो व्याख्यानादिति भावः ॥ ७ " अनाप्यकः " इत्यतः 'अकः' इति 'इदम' इति 'इद' इति च वर्तते ॥८ लोपस्तु न विकार इति लोपेऽलोन्त्यविधिर्न भवति,"भवतेरः" इत्यादौ स्वरूपसत्यादेशे तु भवत्येवेति बोध्यम् ॥ ९ "अतो भिस ऐस्" इति वर्तते ॥

**द्वितीयाटौस्स्वेनः २।४।३४ ॥** इदमेतदोरन्वादेशे । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथा—अनेन व्याकरणमधीतमेनं छन्दोऽध्यापयेति । अनयोः पवित्रं कुलमेनयोः प्रभूतं स्वमिति । एनम् । एनौ । एनान् । एनेन । एनयोः । एनयोः । राजा ॥ **न ङिसम्बुद्ध्योः ८।२।८॥** नस्य लोपो न ङौ संबुद्धौ च । हे राजन् । ( ङावुत्तरपदे प्रतिषेधो वक्तव्यः ) । ब्रह्मनिष्ठः । राजानौ । राजानः । राज्ञः ॥ **नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ८।२।२ ॥** सुब्विधौ स्वरविधौ संज्ञाविधौ कृति तुग्विधौ च नलोपोऽसिद्धो, नान्यत्र राजाश्व इत्यादौ इत्यसिद्धत्वादात्वमेत्त्वमैस्त्वं च न । राजभ्याम् । राजभिः । राज्ञि, राजनि । राजसु ॥ यज्वा । यज्वानौ । यज्वानः ॥ **न संयोगाद्वमन्तात् ६।४।१३७ ॥** वमन्तसंयोगादनोऽकारस्य लोपो न । यज्वनः । यज्वना । यज्वभ्याम् ॥ ब्रह्मणः ब्रह्मणा ॥ **इन्हन्पूषार्यम्णां शौ ६।४।१२ ॥** एषां शावेवोपधाया दीर्घो नान्यत्र । इति निषेधे प्राप्ते ॥ **सौ च ६।४।१३॥**

---

१ "इदमोऽन्वादेशे" इति वर्तते "एतदस्त्रतसो" इत्यत. 'एतद' इति च वर्ततेऽत आह—इदमेतदोरित्यादि ॥ २ " न लोपः प्रातिपदिकान्तस्य " इति सूत्रमेवानुवर्तते ॥ ३ उत्तरपदे परतः ङौ नकारलोपस्याप्रतिषेधः अर्थाद् विधिरेवेत्यर्थ. ॥ ४ " पूर्वत्रासिद्धम् " इति वर्तते । तथा च तेनैव सिद्धेऽसिद्धत्वे पुनर्विधानं नियमार्थमेवेति नियमफलमाह—नान्यत्रेति ॥ ५ " अल्लोपोऽन " इति सूत्रे वर्तते ॥ ६ "ढ्रलोपे—" इत्यतो दीर्घ इति, "नोपधायाः" " सर्वनामस्थाने चासंबुद्धौ " इति वर्तते । तथा च शेः सर्वनामस्थानत्वादेव दीर्घे सिद्धे पुनर्विधानमितरव्यावृत्त्यर्थं नियमार्थमेवेत्याह—नान्यत्रेति ॥

इन्नादीनामुपधाया दीर्घोऽसंबुद्धौ सौ । वृत्रहा । हे वृत्रहन् ॥**एकाजुत्तरपदे णः ८।४।१२ ॥** एकाजुत्तरपदं यस्य तस्मिन्समासे पूर्वपदस्थान्निमित्तात्परस्य प्रातिपदिकान्तनुम्विभक्तिस्थस्य नस्य णः । वृत्रहणौ ॥ **हो हन्तेर्ञ्णिन्नेषु ७।३।५४॥** ञिति णिति प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वम् । वृत्रघ्नः इत्यादि । एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन् ॥ **मघवा बहुलम् ६।४।१२८॥** मघवन्शब्दस्य वा तृ-इत्यन्तादेशः । ऋ इत् ॥ **उगिदचां सर्वनामस्थानेऽधातोः ७।१।७०॥** अधातोरुगितो नलोपिनोऽञ्चतेश्च नुम् स्यात्सर्वनामस्थाने परे । मघवान् । मघवन्तौ । मघवन्तः । हे मघवन् । मघवद्भ्याम् । तृत्वाभावे मघवा । सुटि राजवत् ॥ **श्वयुवमघोनामत-**

---

१ "शावेव" इति नियमेन सौ दीर्घेऽप्राप्ते विध्यर्थमिदमित्याह–**दीर्घोऽसंबुद्धावित्यादि** ॥ २ "रषाभ्यां नो णः" इति "पूर्वपदात्सञ्ज्ञायामगः" इत्यतः 'पूर्वपदात्' इति, " प्रातिपदिकान्तनुम्विभक्तिषु च " इति च वर्तते अत आह–**पूर्वपदस्थादिति** ॥ ३ "चजोः कु–" इत्यतः ' कु ' इति वर्ततेऽत आह–**कुत्वमिति**॥ ४ "अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति" इति वचनाद् विन्प्रत्यये इनोऽनर्थकत्वेपि दीर्घनियमसिद्धी भवतः ॥ ५ "अर्वणस्तृ–" इत्यतः 'तृ' इति वर्तते । "नानुबन्धकृतमनेकाल्त्वम्" इति परिभाषयाऽनेकाल्त्वनिषेधे सर्वादेशत्वाप्राप्तिफलितमाह–**तृ इत्यन्तादेश इति**॥ ६ "इदितो नुम्–" इत्यतः 'नुम्' इति वर्तते । अचूपदेन नलोप्यञ्चतेरेव ग्रहणं व्याख्यानादित्यभिप्रेत्याह–**नलोपिन इत्यादि** ॥

द्धिते ६।४।१३३ ॥[1] अन्नन्तानां भानामेषामतद्धिते सम्प्रसारणम् । मघोनः । मघवभ्याम् । एवं श्वन्, युवन् ॥ न संप्रसारणे संप्रसारणम् ६।१।३७ ॥ सम्प्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात् । इति यकारस्य नेत्वम् । अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् । यूनः । यूना । युवभ्याम् इत्यादि ॥ अर्वा । हे अर्वन् ॥ अर्वणस्त्रसावनञः ६।४।१२७ ॥ नञा रहितस्यार्वन्नित्यस्याऽङ्गस्य तृ इत्यन्तादेशो न तु सौ । अर्वन्तौ । अर्वन्तः । अर्वद्भ्यामित्यादि ॥ पथिमथ्यृभुक्षामात् ७।१।८५ ॥ एषामाकारोन्तादेशः स्यात् सौ परे । इतोऽत्सर्वनामस्थाने ७।१।८६ ॥ पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे । थो न्थः ७।१।८७ ॥ पथिमथोस्थस्य न्थादेशः सर्वनामस्थाने । पन्थाः । पन्थानौ । पन्थानः ॥ भस्य टेर्लोपः ७।१।८८ ॥ भस्य पथ्यादेष्टेर्लोपः । पथः । पथा । पथिभ्याम् । एव मथिन्, ऋभुक्षिन् ॥ ष्णान्ता षट् १।१।२४ ॥ षान्ता नान्ता

---

१ "भस्य" इत्यधिक्रियते । "वसोः संप्रसारणम्" इत्यतः 'सम्प्रसारणम्' इति, "अल्लोपोऽनः" इत्यतः 'अनः' इत्यपकृष्टं गृह्यमाणविशेषणमिति तदन्तविधिरित्याह—अन्नन्तानामिति ॥ २ "सावनडुहः" इत्यतः 'सौ' इति वर्तते । शुद्धाया एव व्यक्तेर्विधीयमानत्वेनासवर्णग्रहणाप्राप्त्या नानुनासिक इत्याह—आकार इति ॥ ३ "पथिमथ्यृभुक्षाम्" इति वर्ततेऽत आह—पथ्यादेरिति ॥ ४ अनुवृत्ताना पथिमथ्यृभुक्षिन्शब्दानाम् ऋभुक्षिन्शब्दे थकारासम्भवादाह—पथिमथोरिति ॥ ५ "पथिमथ्यृभुक्षाम्" इति वर्ततेऽत आह—पथ्यादेरिति ॥

च संख्या षट्संज्ञा स्यात् । पञ्चन्शब्दो नित्यं बहुवचनान्तः । पञ्च । पञ्च । पञ्चभिः । पञ्चभ्यः । पञ्चभ्यः । नुट् । **नोपधायाः ६।४।७॥** नान्तस्योपधाया दीर्घो नामि । पञ्चानाम् । पञ्चसु ॥ **अष्टन आ विभक्तौ ७।२।८४ ॥** हलादौ वा स्यात् । **अष्टाभ्य औश् ७।१।२१ ॥** कृताकारादष्टनो जश्शसोरौश् । अष्टभ्य इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । अष्टौ । अष्टौ । अष्टाभिः । अष्टाभ्यः । अष्टाभ्यः । अष्टानाम् । अष्टासु । आत्वाभावे अष्ट, पञ्चवत् ॥ **ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ३।२।५९ ॥** एभ्यः क्विन् अञ्चेः सुप्युपपदे, युजिक्रुञ्चोः केवलयोः, क्रुञ्चेर्नलोपाभावश्च निपात्यते । कनावितौ ॥ **कृदतिङ् ३।१।९३ ॥** अत्र धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् । **वेरपृक्तस्य ६।१।६७ ॥**

---

१ "बहुगणवतुडति" इत्यत. 'सख्या' इति वर्तते ॥ २ "ढ्रलोपे" इत्यतः 'दीर्घः' इति वर्तते "नामि" इति "अङ्गस्य" इत्यधिकृतविशेषणे नकारे तदन्तविधिरित्याह—**नान्तस्येति** ॥ ३ "रायो हलि" इत्यतोऽपकृष्टहल्पदे तदादिविधिः, "अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणसामर्थ्यादस्य वैकल्पिकत्वमवगम्यते इत्याह—**हलादौ वेति** ॥ ४ "अष्टन·" इत्येव वक्तव्ये "अष्टाभ्यः" इति निर्देशः कृताकारविवक्षार्थः सन् जश्शसोर्विषयेऽप्यात्वं ज्ञापयति ॥ "जश्शसोः शि·" इत्यतो 'जश्शसोः' इत्यनुवर्ततेऽत आह—**कृताकारादित्यादि** ॥ ५ अष्टभ्य इतीति कथनं गुर्वनुरोधेन । भाष्येतु 'अष्टन इति' इत्येवोपलभ्यते ॥ ६ "स्पृशोऽनुदके" इत्यतः 'क्विन्' इति वर्तते ॥ ७ नलोपाभाव इति । नकारस्यौपदेशिकस्य नकारादेशनिपातनेनेति बोध्यम् ॥

अपृक्तस्य वस्य लोपः । **क्विन्प्रत्ययस्य कुः ८।२।६२ ॥** क्विन्प्रत्ययो यस्मात्तस्य कवर्गोऽन्तादेशः पदान्ते । अस्यासिद्धत्वाच्चोः कुरिति कुत्वम् । ऋत्विक्, ऋत्विग् । ऋत्विजौ । ऋत्विग्भ्याम् ॥ **युजेरसमासे ७।१।७१ ॥** युजेः सर्वनामस्थाने नुम् स्यादसमासे । सुलोपः । सयोगान्तलोपः । कुत्वेन नस्य ङः । युङ् । अनुस्वारपरसवर्णौ । युञ्जौ । युञ्जः । युग्भ्याम् ॥ **चोः कुः ८।२।३० ॥** चवर्गस्य कवर्गः स्याज्झलि पदान्ते च । सुयुक्, सुयुग् । सुयुजौ । सुयुग्भ्याम् ॥ खन् । खञ्जौ । खन्भ्याम् ॥ **व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ८।२।३६ ॥** झलि पदान्ते च । जश्त्वचर्त्वे । राट्, राड् । राजौ । राजः । राड्भ्याम् ॥ एवं विभ्राट् । देवेट् । विश्वसृट् ॥ ( परौ व्रजेः षः पदान्ते ) । परावुपपदे व्रजेः क्विप् स्याद्दीर्घश्च पदान्ते षत्वमपि । परिव्राट् । परिव्राजौ ॥

---

१ "लोपो व्योर्वलि" इत्यतो 'लोप' इति वर्तते ॥ २ "यस्मात्" इति बहुव्रीहिफलं तु स्त्रीलिङ्गे दृकृशब्दे कथयिष्यति ॥ "पदस्य" इति त्वधिक्रियत एव ॥ ३ "इदितो नुम्" इत्यतो 'नुम्' इति "उगिदचाम्" इत्यतः 'सर्वनामस्थाने' इति वर्तते ॥ ४ **कुत्वेनेति** । "क्विन्प्रत्ययस्य" इति सूत्रेणेत्यर्थः "चो कु." इत्यस्य तु न प्राप्तिश्चवर्गाभावात् ॥ ५ "पदस्य" इत्यधिक्रियते "झलो झलि" इत्यत 'झलि' इति वर्तते । 'स्को संयोगाद्योः' इत्यत 'अन्ते' इति च ॥ कुर्वो कुम्र इत्यादौ कुत्वं तु जकारादेशनिपातनस्य बाधकत्वेन बाध्यत एवेति बोध्यम् ॥ इत्यभिप्रेत्याह–**झलीत्यादि** ॥ ६ "पदस्य" इत्यधिकृतम् । 'स्कोः' इत्यत 'अन्ते' इति "झलो झलि" इत्यत. 'झलि' इति च वर्तते ऽत आह–झलिपदान्ते इति ॥

**विश्वस्य वसुराटोः ६।३।१२८ ॥** विश्वशब्दस्य दीर्घोऽन्तादेशः[1] स्याद्वसौ राट्शब्दे च परे । विश्वाराट्, विश्वाराड् । विश्वराजौ । विश्वाराड्भ्याम् ॥ **स्कोः संयोगाद्योरन्ते च ८।२।२९ ॥** पदान्ते[2] झलि च यः संयोगस्तदाद्योः स्कोर्लोपः । भृट् । सस्य श्चुत्वेन शः । झलाञ्जश् झशि इति शस्य जः । भृज्जौ । भृड्भ्याम् ॥ त्यदाद्यत्वं पररूपत्वं च ॥ **तदोः सः सावनन्त्ययोः ७।२।१०६ ॥** त्यदादीनां[3] तकारदकारयोरनन्त्ययोः सः स्यात्सौ । स्यः । त्यौ । त्ये ॥ सः । तौ । ते ॥ यः । यौ । ये ॥ एषः । एतौ । एते ॥ **ङे प्रथमयोरम् ७।१।२८ ॥** युष्मदस्मद्भ्यां परस्य ङे इत्येतस्य प्रथमाद्वितीययोश्चामादेशः । **त्वाहौ सौ ७।२।९४ ॥** अनयोर्मपर्यन्तस्य[5] त्वाऽहौ आदेशौ स्तः । **शेषे लोपः ७।२।९२ ॥** एतयोष्टिलोपः[6] । त्वम् ।

---

१ "ढ्रलोपे-" इत्यतो 'दीर्घः' इत्यनुवर्ततेऽत आह-दीर्घ इति ॥ राट् इति चर्त्वमविवक्षितम् । पदान्तत्वमात्रं विवक्षितमित्यभिप्रेत्योदाहरति-विश्वाराड्भ्यामिति ॥ २ "पदस्य" इत्यधिकृतम् ॥ "झलो झलि" इत्यतो 'झलि' इति वर्तते । "संयोगान्तस्य लोपः" इत्यतो 'लोपः' इति चात आह-पदान्ते इति॥ ३ "त्यदादीनामः" इत्यतः 'त्यदादीनाम्' इति वर्ततेऽत आह-त्यदादीनामिति ॥ ४ "युष्मदस्मद्भ्यां ङसः" इत्यत 'युष्मदस्मद्भ्याम्' इति वर्तते । ङे इति लुप्तषष्ठ्यन्त पृथक् पदम् । 'प्रथमयो' इति प्रथमाशब्द प्रथमाद्वितीयाविभक्तिपर इत्याह-युष्मदस्मद्भ्यामित्यादि ॥ ५ "युष्मदस्मदोरनादेशे" इत्यतः 'युष्मदस्मदोः' इति वर्तते "मपर्यन्तस्य" इति चाधिक्रियतेऽत आह-अनयोर्मपर्यन्तस्येति ॥ ६ "युष्मदस्मदो." "मपर्यन्तस्य" इति पञ्चमीविपरिणतमनुवर्तते 'शेषे' इति षष्ठ्या विपरिणम्यते ॥ तथा च 'अनयोर्मपर्यन्ता च्छेषस्य लोपः' इत्यर्थफलितमाह-टिलोप इति ॥

अहम् ॥ **युवावौ द्विवचने ७।२।९०॥** द्वयोरुक्तावनयोर्मपर्यन्तस्य युवावौ स्तो विभक्तौ ॥ **प्रथमायाश्च द्विवचने भाषायाम् ७।२।८८ ॥** औङ्येतयोरात्वं लोके ।आवाम् ॥ **यूयवयौ जसि ७।२।९३॥** अनयोर्मपर्यन्तस्य। यूयम् । वयम् ॥ **त्वमावेकवचने ७।२।९७ ॥** एकस्योक्तावनयोर्मपर्यन्तस्य त्वमौ स्तो विभक्तौ ॥ **द्वितीयायाश्च ७।२।८७ ॥** अनयोरात्स्यात् । त्वाम् । माम् ॥ **शसो न ७।१।२८ ॥** आभ्यां शसो न स्यात् । अमोऽपवादः । आदेः परस्य । सयोगान्तलोपः । युष्मान् । अस्मान् ॥ **योऽचि ७।१।८९ ॥** अनयोर्यकारादेशः स्यादनादेशेऽजादौ परतः । त्वया ।

---

१ "युष्मदस्मदो." "मपर्यन्तस्य" इति वर्तने "अष्टन आ–" इत्यतो विभक्ताविति च ॥ द्विवचनशब्देन औभ्यामादि न गृह्यते युवामावा वातिक्रांतेन अतियुवया इत्यादावेकवचनविभक्तौ परतो युवावादेशानुपपत्ते । अतो 'द्विवचने' इति विभक्तिविपरिणामेन युष्मदस्मदोर्विशेषणम् तथा च'द्वित्ववाचिनोरनयोर्युवावौ' इत्यर्थाङ्गीकारफलितमाह–**द्वयोरुक्तावित्यादि** ॥ २ " अष्टन आ विभक्तौ" इत्यत. 'आ विभक्तौ' इति "युष्मदस्मदो."इति च वर्तते।त आह–**एतयोरात्वमिति**॥ ३"युष्मदस्मदो·" "मपर्यन्तस्य"इति वर्तते।त आह–**अनयोरित्यादि**॥ ४ एकवचनपदं युष्मदस्मदोरेव विशेषणम्, न विभक्तिविशेषणम्। तथा च त्वां मा वाऽतिक्रान्तौ–अतित्वाम् अतिमाम् इत्यादौ द्विवचनविभक्तावपि त्वमादेशोपपत्तिर्निर्बाधा ॥ "युष्मदस्मदोः" "मपर्यन्तस्य" इति वर्तते।त आह–**एकस्योक्तावित्यादि** ॥ ५ "अष्टन –' इत्यतः 'आ विभक्तौ' इति "युष्मदस्मदो.' इति च वर्तते ॥ ६ "युष्मदस्मद्भ्याम्" इति वर्तते।न आह-**आभ्यां शस इति** ७ "युष्मदस्मदोरनादेशे" इति वर्तते।न आह–**अनयोरित्यादि** ॥

मया ॥ **युष्मदस्मदोरनादेशे ७।२।८६** ॥ अनयोरात्स्यादनादेशे हलादौ विभक्तौ। युवाभ्याम्। आवाभ्याम् । युष्माभिः । अस्माभिः ॥ **तुभ्यमह्यौ ङयि ७।२।९५** ॥ अनयोर्मपर्यन्तस्य । टिलोपः । तुभ्यम् । मह्यम् ॥ **भ्यसोऽभ्यम् ७।१।३०** ॥ आभ्यां परस्य । युष्मभ्यम् । अस्मभ्यम् ॥ **एकवचनस्य च ७।१।३२** ॥ आभ्यां ङसेरत् । त्वत् । मत् ॥ **पञ्चम्या अत् ७।१।३१** ॥ आभ्यां पञ्चम्या भ्यसोऽत्स्यात् । युष्मत् । अस्मत् ॥ **तवममौ ङसि ७।२।९६** ॥ अनयोर्मपर्यन्तस्य तवममौ स्तो ङसि ॥ **युष्मदस्मद्भ्यां ङसोऽश् ७।१।२७** ॥ तव । मम । युवयोः । आवयोः ॥ **साम आकम् ७ । १ । ३३** ॥ आभ्यां परस्य साम आकं स्यात् युष्माकम् । अस्माकम् । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु ॥ **युष्मदस्मदोः षष्ठीचतुर्थीद्वितीया-**

---

१ "अष्टनः–" इत्यतः 'आ विभक्तौ' इति, "रायो हलि" इत्यतो हलीति वर्तते । विशेषणे तदादिविधिरित्याह–**आदिति** ॥ २ "युष्मदस्मदोः" "मपर्यन्तस्य" इति वर्ततेऽत आह–**अनयोरिति** ॥ ३ "युष्मदस्मद्भ्याम्" इति वर्ततेऽत आह–**आभ्यामिति** ॥ ३ "युष्मदस्मद्भ्याम्" इति "पञ्चम्या अत्" इति च वर्तते । तत्फलितमाह–**आभ्यां ङसेरिति** ॥ ५ "युष्मदस्मद्भ्याम्" इति "भ्यसः–" इति च वर्ततेऽत आह–**आभ्यां पञ्चम्या इति**॥ ६ "युष्मदस्मदो." "मपर्यन्तस्य" इति वर्ततेऽतआह–**अनयोरिति** ॥ ७ "युष्मदस्मद्भ्याम्" इति वर्तते । "सामः" इति सकारः "गोतो णित्" इत्यत्र णकार इवाविवक्षितः । इत्यभिप्रेत्याह–**आभ्यामिति** ॥

**स्थयोर्वानावौ ८।१।२०॥** पदात्परयोरपादादौ स्थितयोः षष्ठ्यादिविशिष्टयोर्वां नौ इत्यादेशौ स्तः ॥ **बहुवचनस्य वस्नसौ ८।१।२१॥** उक्तविधयोरनयोः षष्ठ्यादिबहुवचनान्तयोर्वस्नसौ स्तः ॥ **तेमयावेकवचनस्य ८।१।२२॥** उक्तविधयोरनयोष्षष्ठीचतुर्थ्येकवचनान्तयोस्ते मे एतौ स्तः॥**त्वामौ द्वितीयायाः८।१।२३॥** द्वितीयैकवचनान्तयोस्त्वा मा इत्यादेशौ स्तः । श्रीशस्त्वाऽवतु मापीह, दत्ता ते मेऽपि शर्म सः । स्वामी ते मेऽपि स हरिः, पातु वामपि नौ विभुः ॥ सुखं वां नौ ददात्वीशः, पतिर्वामपि नौ हरिः । सोऽव्याद्वो नः शिवं वो नो, दद्यात् सेव्योऽत्र वः स नः ॥ (एकवाक्ये युष्मदस्मदादेशा वक्तव्याः)।(एकतिङ् वाक्यम्) ओदनं पच तव भविष्यति ॥ (एते वान्नावादयोऽनन्वादेशे वा वक्तव्याः)। अन्वादेशे तु नित्यं स्युः । धाता ते भक्तोऽस्ति, धाता तव भक्तोऽस्ति वा । तस्मै ते नम इत्येव ॥ सुपात्, सुपाद् । सुपादौ॥**पादः पत् ६।४।१३०॥** पाच्छब्दान्तं यदङ्ग

---

१ "पदस्य" "पदात्" "अनुदात्तं सर्वमपादादौ" इत्यधिक्रियन्तेऽत आह–पदादिति ॥ २ "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः–" इति साधिकृतमनुवर्ततेऽत आह–उक्तविधयोरिति ॥ ३ "युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोः–" इति साधिकृतमनुवर्तते तत्र द्वितीयैकवचने त्वामादेशाभ्यां तेमयादेशबाधनात्परिशेषादाह–उक्तविधेति ॥ ४ "युष्मदस्मदोः" इति, "तेमयौ–" इत्यतः 'एकवचनस्य' इति वर्ततेऽत आह–द्वितीयैकवचनेति ॥ 'उक्तविधयोरनयोः' इति तु कदापि न विस्मरणीयम् ॥ ५ "अङ्गस्य" "भस्य" इत्यधिक्रियेते 'निर्दिश्यमानस्यादेशा भवन्ति' इति परिभाषालब्धमर्थमाह–पाच्छब्दान्तमित्यादि ॥

भं तदवयवस्य पाच्छब्दस्य पदादेशः । सुपदः । सुपदा । सुपाद्भ्याम् ॥ अग्निमत्, अग्निमद् । अग्निमथौ । अग्निमथः ॥ **अनिदितां हल उपधायाः क्ङिति ६।४।२४** ॥ हलन्तानामनिदितामङ्गानामुपधाया नस्य लोपः किति ङिति।नुम्।संयोगान्तस्य लोपः।नस्य कुत्वेन ङः। प्राङ्। प्राञ्चौ । प्राञ्चः ॥**अचः ६।४।१२८**॥ लुप्तनकारस्याऽञ्चतेर्भस्याकारस्य लोपः॥**चौ ६।३।१३८** ॥ लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः । प्राचः । प्राचा । प्राग्भ्याम् ॥प्रत्यङ् । प्रत्यञ्चौ ॥ प्रतीचः । प्रत्यग्भ्याम् ॥ उदङ् । उदञ्चौ ॥ **उद ईत् ६।४।१३९** ॥ उच्छब्दात्परस्य लुप्तनकारस्याञ्चतेर्भस्याकारस्य ईत् ।उदीचः।उदीचा।उदग्भ्याम्॥ **समः समि ६।३।९३** ॥ वप्रत्ययान्तेऽञ्चतौ ।सम्यङ् । सम्यञ्चौ । समीचः । सम्यग्भ्याम् ॥ **सहस्य सध्रिः ६।३।९५** ॥ तथा ।

---

१ "अङ्गस्य" इत्यधिक्रियते । "श्नान्नलोपः" इत्यतः 'नलोप' इति वर्तते विशेषणे तदन्तविधिरत आह–हलन्तानामित्यादि ॥ २ "अङ्गस्य" "भस्य" इत्यधिक्रियेते । "अल्लोपोऽन." इत्यत 'अल्लोपः' इति वर्तते । अच्शब्देन लुप्तनकाराञ्चतेरेव ग्रहण व्याख्यानादित्यभिप्रेत्याह–**लुप्तनकारेति** ॥ ३ "ढ्रलोपे–" इत्यतः 'पूर्वस्य दीर्घोऽणः' इति वर्तते । चिशब्देन लुप्ताकारनकारस्याञ्चतेरेव ग्रहणं व्याख्यानादित्यभिप्रेत्याह–**लुप्ताकारनकारे इति** ॥ ४ "भस्य" इत्यधिक्रियते । "अचः" इति वर्ततेऽत आह–**लुप्तनकारेति** ॥ ५ "विष्वग्देवयोश्च टेरद्र्य–" इत्यतः 'अञ्चतावप्रत्यये' इति वर्ततेऽत आह–**वप्रत्ययान्तेति** ॥ ६ 'अञ्चतावप्रत्यये' इति वर्ततेऽत आह–**तथेति** ॥

सध्र्यङ् ॥ **तिरसस्तिर्यलोपे ६।३।९४** ॥ अलुप्ताकारेऽञ्चतौ व-प्रत्ययान्ते तिरसस्तिर्यादेशः । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिर्यग्भ्याम् ॥ **नाञ्चेः पूजायाम् ६।४।३०** ॥ पूजार्थस्याञ्चतेरुपधाया नस्य लोपो न । प्राङ् । प्राञ्चौ । नलोपाभावादलोपो न । प्राञ्चः । प्राङ्भ्याम् । प्राङ्क्षु ॥ एवं पूजार्थे प्रत्यङ्ङादयः ॥ क्रुङ् । क्रुञ्चौ । क्रुङ्भ्याम् ॥ पयोमुक्, पयोमुग् । पयोमुचौ । पयोमुग्भ्याम् ॥ उगित्त्वान्नुम् (मि,–**सान्त महतः संयोगस्य ६।४।१०** ॥ सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घोऽसम्बुद्धौ सर्वनामस्थाने । महान् । महान्तौ । महान्तः । हे महन् । महद्भ्याम् ॥

---

१ "तिर्यच्यपवर्गे" इति निर्देशाद्–लुप्यत इति लोपः । स चासावश्चेरि लोपो लुप्ताकार. । न लोपो यस्मिन् सोऽलोप –अलुप्ताकार तस्मिन्नित्यर्थः ॥ इत्यभिप्रेत्याह–**अलुप्ताकार इति** ॥ २ "अनिदिता हल उपधायाः–" इति वर्ततेऽत आह–**पूजार्थस्येति** ॥ ३ "अच." इति लुप्तनकारस्याञ्चतेरेव ग्रहणे फलमाह–**अलोपो नेति** ॥ ४ चकारसन्निधौ "चोः कुः" इति झल्निमित्तककुत्वमपि 'बाधकान्येव निपातनानि' इति न प्रवर्तते । पदान्तनिमित्तकं कुत्वं तु भवत्येव। "क्विन्प्रत्ययस्य–"इत्यस्य झल्निमित्तकत्वाभावेन बाधकविषयत्वाभावात्॥ १ "ढ्लोपे–" इत्यतो 'दीर्घः' इति, "नोपधायाः" इति "सर्वनामस्थाने चासंबुद्धौ" इति वर्तन्ते।'सान्त' इति लुप्तषष्ठ्यन्तं संयोगस्य विशेषणम् ।'महत.' 'संयोगस्य' इति वैयधिकरण्येन । 'न' इति लुप्तषष्ठ्यन्तस्य विशेषणम् । तच्च 'उपधायाः' इत्यत्र वैयधिकरण्येन विशेषणमित्यभिप्रेत्याह–**सान्तसंयोगेति**॥

**अत्वसन्तस्य चाधातोः ६।४।१४ ॥** अत्वन्तस्योपधाया दीर्घो धातुभिन्नासन्तस्य चासंबुद्धौ सौ परे । उगित्त्वान्नुम् । धीमान् । धीमन्तौ । धीमन्तः । हे धीमन् । शसादौ महद्वत् ॥ भातेर्डवतुः । डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भवान् । भवन्तौ । भवन्तः । शत्रन्तस्य भवन् ॥ **उभे अभ्यस्तम् ६।१।५ ॥** षाष्ठद्वित्वप्रकरणे ये द्वे विहिते ते[2] उभे समुदिते अभ्यस्तसंज्ञे स्तः ॥ **नाभ्यस्ताच्छतुः ७।१।७८ ॥** अभ्यस्तात्परस्य शतुर्नुम् न । ददत्, ददद् । ददतौ । ददतः ॥ **जक्षित्यादयः षट् ६।१।६ ॥** षड्धातवोऽन्ये जक्षितिश्च सप्तम एते अभ्यस्तसंज्ञाः स्युः ।जक्षत्, जक्षद् । जक्षतौ । जक्षतः ॥ एवं जाग्रत् । दरिद्रत् । शासत् । चकासत् । गुप्, गुब् । गुपौ । गुपः । गुब्भ्याम् ॥ **त्यदादिषु दृशोऽनालोचने कञ्च ३।२।६० ॥** त्यदादिषूपपदेष्वज्ञानार्थदृशेः कञ् चात् क्विन् ।

---

१ 'अतु' इति लुप्तषष्ठ्यन्तं पृथक् पदम् । 'अधातोः' इति च 'अनन्तरस्य प्रतिषेधः' इति परिभाषया 'असन्तस्य' इत्यस्यैव विशेषणम् । "सौ च" इत्यत. 'सौ' इति "सर्वनामस्थाने च-" इत्यतः 'असंबुद्धौ' इति, "नोपधायाः" इत्यतः 'उपधायाः' इति, "ढ्लोपे-" इत्यतः 'दीर्घः' इति वर्तन्तेऽत आह-**अत्वन्तस्योपधेति** ॥ नुमि कृते अत्वन्तोपधायामचोऽसंभवात्सूत्रवैयर्थ्यापत्त्या पूर्वं दीर्घे नुम् भवतीति भावः॥ २ "एकाचो द्वे प्रथमस्य" इत्यत. 'द्वे' इति वर्तमानेऽपि 'उभे' ग्रहणसामर्थ्याल्लब्धमर्थमाह-**ते उभे समुदिते इति** ॥ ३ "इदितो नुम्-" इत्यतः 'नुम्' इति वर्ततेऽत आह-**नुम् नेति** ॥ ४ "उभे अभ्यस्तम्" इत्यतः 'अभ्यस्तम्' इति वर्तते । अतद्गुणसंविज्ञानबहुव्रीहिफलमाह-**षड् धातवोऽन्य इति** ॥ ५ "स्पृशोऽनुदके-" इत्यतः 'क्विन्' इति वर्ततेऽत आह-**चात् क्विन्निति** ॥

**आ सर्वनाम्नः ६।३।९१** ॥ सर्वनाम्न आकारोऽन्तादेशः स्याद्दृग्-दृशवतुषु । तादृक्, तादृग् । तादृशौ । तादृशः । तादृग्भ्याम् ॥ व्रश्चेति षः । जश्त्वचर्त्वे । विट्, विड् । विशौ । विशः । विड्भ्याम् ॥ **नशेर्वा ८।२।६३** ॥ नशेः कवर्गोऽन्तादेशो वा पदान्ते । नक्, नग् । नट्, नड् । नशौ । नशः । नग्भ्याम्, नड्भ्याम् ॥ **स्पृशोऽनुदके क्विन् ३।२।५८** ॥ अनुदके सुप्युपपदे स्पृशेः क्विन् । घृतस्पृक्, घृतस्पृग् । घृतस्पृशौ । घृतस्पृशः ॥ दधृक्, दधृग् । दधृषौ । दधृग्भ्याम् ॥ रत्नमुषौ । रत्नमुड्भ्याम् ॥ षट्, षड् । षड्भिः । षड्भ्यः । षण्णाम् । षट्सु ॥ रुत्वं प्रति षत्वस्यासिद्धत्वात्ससजुषोरुरिति रुत्वम् ॥ **र्वोरुपधाया दीर्घ इकः ८।२।७६** ॥ रेफवान्तयोर्धात्वोरुपधाया इको दीर्घः पदान्ते । पिपठीः । पिपठिषौ । पिपठीर्भ्याम् ॥ **नुम्विसर्जनीयशर्व्यवायेऽपि ८।३।५८** ॥ एतैः प्रत्येकं व्यवधानेऽपि इण्कुभ्यां परस्य सस्य मूर्धन्यादेशः । ष्टुत्वेन पूर्वस्य षः।

---

१ "दृग्दृशवतुषु" इति वर्तते ॥ २ "पदस्य" इत्यधिक्रियते । "क्विन्प्रत्ययस्य–" इत्यतः 'कु' इति वर्ततेऽत आह–कवर्ग इति ॥ ३ "पदस्य" इत्यधिकृतम् । "स्कोः संयोगाद्योः–" इत्यतः 'अन्ते' इति वर्तते । "सिपि धातोः" इत्यतः 'धातो' इति च तद्विशेषणत्वेन तदन्तविधिरित्याह–रेफवान्तयोरिति ॥ ४ "अपदान्तस्य मूर्धन्यः" 'इण्कोः' इति वर्तते "सहेः साडः सः" इत्यतः 'सः' इति चात आह–इण्कुभ्यामिति ॥ ५ सनोऽकारलोपं प्रति षत्वस्यासिद्धत्वेनाकारलोपे सस्य पदान्तत्वेन "अपदान्तस्य–" इति निषेधात्षत्वाप्राप्त्या 'ष्टुत्वेन' इत्यावश्यकम् ॥

गिपठीष्षु, पिपठीःषु ॥ चिकीः । चिकीर्षौ । चिकीर्भ्याम् । चिकीर्षु ॥ विद्वान् । विद्वांसौ । हे विद्वन् ॥ **वसोः सम्प्रसारणम् ६।४।१३१॥** वस्वन्तस्य भस्य सम्प्रसारणं स्यात् । विदुषः । वसुस्रंस्विति दः । विद्वद्भ्याम् ॥ **पुंसोऽसुङ् ७।१।८९॥** सर्वनामस्थाने विवक्षितेऽसुङ् स्यात् । पुमान् । हे पुमन् । पुमांसौ । पुंसः । पुम्भ्याम् । पुंसु ॥ ऋदुशनेत्यनङ् । उशना । उशनसौ । ( अस्य सम्बुद्धौ वानङ्, नलोपश्च वा वाच्यः ) । हे उशन, हे उशनन्, हे उशनः । हे उशनसौ । उशनोभ्याम् । उशनस्सु ॥ अनेहा । अनेहसौ । हे अनेहः ॥ वेधाः । वेधसौ । हे वेधः । वेधोभ्याम् ॥ **अदस औ सुलोपश्च ७।२।१०७॥** अदस औत्स्यात्सौ परे सुलोपश्च । तदोरिति सः । असौ । त्यदाद्यत्वम् । पररूपत्वम् । वृद्धिः । **अदसोऽसेर्दादु दो मः ८।२।८०॥** अदसोऽसान्तस्य दात्परस्य उदूतौ, दस्य मश्च । आन्तरतम्याद्ध्रस्वस्य उः, दीर्घस्य ऊः । अमू । जसः शी । गुणः । **एतईद्बहुवचने ८।२।८१॥** अदसो दात्परस्यैत ईद्दस्य च मो बह्वर्थोक्तौ । अमी ।

---

१ "भस्य" इत्यधिक्रियते ॥ २ "इतोऽत् सर्वनामस्थाने" इत्यतः 'सर्वनामस्थाने' इति वर्तते । तच्च विवक्षितमेव ग्राह्यम्, न तु परत्वविशिष्टम्, व्याख्यानात् इत्याह-सर्वनामस्थाने विवक्षित इति ॥ ३ "अत्वसन्तस्य-" इति असन्तत्वाद्दीर्घे रुत्वविसर्गौ ॥ ४ "तदोः सः सौ-" इत्यतः 'सौ' इति वर्तते ॥ ५ 'भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति' इति परिभाषालभ्यमर्थमाह-उदूताविति ॥ ६ "अदसोऽसेर्दादुदोमः" इति सूत्रम् उकाररहितमनुवर्ततेऽत आह-अदसोदादिति ॥

पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमनत्ये । अमुम् । अमू । अमून् । मुत्वे कृते विसञ्ज्ञायां नाभावः ॥ न मु ने ८।२।३ ॥ नाभावे कर्तव्ये कृते च मुभावो नासिद्धः । अमुना । अमूभ्याम् ३ । अमीभिः । अमुष्मै । अमीभ्यः २ । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमुष्मिन् । अमीषु ॥

इति हलन्तपुंलिङ्गाः ॥

नहो धः ८।२।३४ ॥ नहो हस्य धः स्यात् झलि पदान्ते च ॥ नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ६।३।११६ ॥ क्विबन्तेषु पूर्वपदस्य दीर्घः । उपानत्, उपानद् । उपानहौ । उपानत्सु ॥ क्विन्नन्तत्वात् कुत्वेन घः । उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिग्भ्याम् ॥ द्यौः । दिवौ । दिवः । द्युभ्याम् ॥ गीः । गिरौ । गिरः ॥ एवं पूः ॥ चतस्रः । चतसृणाम् ॥ का । के । काः । सर्ववत् ॥ यः सौ ।

---

१ 'पूर्वत्रासिद्धमिति विभक्तिकार्यं प्राक् पश्चादुत्वमन्त्ये' इति पूर्वोक्तेन विरुद्धम् 'मुत्वे कृते घिसञ्ज्ञायां नाभावः' इति कथमुक्तम् ? अतो विरुद्धकथने प्रमाणमुपन्यस्यति—न मु ने इति ॥ २ "झलो झलि" इत्यतः 'झलि' इति वर्तते, "स्कोः संयोगाद्योः—" इत्यतः 'अन्ते' इति च । तच्च 'पदस्य' इत्यधिकृतेऽन्वेति इत्याह—झलि पदान्ते चेति ॥ "हो ढः" इत्यस्यापवादोऽयम् ॥ ३ "ढ्रलोपे—" इत्यतः 'पूर्वस्य दीर्घोऽणः' इति वर्तते । 'क्वौ' इति तु विशेषणम् । अतो विशेषणे तदन्तविधिरित्याह—क्विबन्तेष्वित्यादि ॥

७।२।११० ॥ इदमो दस्य यः । इयम् । त्यदाद्यत्वम् । पररूपत्वम् । टाप् । दश्चेति मः । इमे । इमाः । इमाम् । अनया । हलि लोपः । आभ्याम् । आभिः । अस्यै । अस्याः । अनयोः । आसाम् । अस्याम् । आसु ॥ त्यदाद्यत्वम् । टाप् । स्या । त्ये । त्याः ॥ एवं तद्, एतद् ॥ वाक्, वाग् । वाचौ । वाग्भ्याम् । वाक्षु ॥ अप्शब्दो नित्यं बहुवचनान्तः । अप्तृन्निति दीर्घः । आपः । अपः ॥ **अपो भि ७।४।४८॥** अपस्तकारो भादौ प्रत्यये । अद्भिः । अद्भ्यः । अद्भ्यः । अपाम् । अप्सु ॥ दिक्, दिग् । दिशौ । दिशः । दिग्भ्याम् । त्यदादिष्विति दृशेः क्विन्विधानादन्यत्रापि कुत्वम् । दृक्, दृग् । दृशौ । दृग्भ्याम् । त्विट्, त्विड् । त्विषौ । त्विड्भ्याम् ॥ ससजुषोरुरिति रुत्वम् । सजूः । सजुषौ । सजूर्भ्याम् ॥ आशीः । आशिषौ । आशीर्भ्याम् ॥ असौ । उत्वमत्वे । अमू । अमूः । अमुया । अमूभ्याम् ३ । अमूभिः । अमुष्यै । अमूभ्यः २ ॥ अमुष्याः । अमुयोः २ । अमूषाम् । अमुष्याम् अमूषु ॥

इति हलन्तस्त्रीलिङ्गाः ॥

---

१ "इदमो मः" इत्यतः 'इदमः' इति, "दश्च" इत्यतः 'दः' इति च वर्ततेऽत आह-इदम इत्यादि ॥ २ "अच उपसर्गात्" इति सूत्रात् 'तः' इति वर्तते अङ्गाधिकारलब्धप्रत्ययविशेषणे तदादिविधिरत आह-तकार इत्यादि ॥ ३ "क्विन्प्रत्ययस्य" इत्यत्र बहुव्रीहिस्वीकारफलमाह-त्यदादिष्वितीति ॥

वमोर्ध्वक्। दत्वम्। स्वनडुत्, स्वनडुद्। स्वनडुही। चतुरनडुहोरित्याम्। स्वनड्वाहि। पुनस्तद्वत्। शेषं पुंवत्॥ वाः। वारी। वारि। वार्भ्याम्॥ चत्वारि॥ किम्। के। कानि॥ इदम्। इमे। इमानि॥ (अन्वादेशे नपुंसके वा एनद्वक्तव्यः)। एनत्। एने। एनानि। एनेन। एनयोः॥ अहः। विभाषा ङिश्योः। अह्नी। अहनी। अहानि॥ **अहन् ८।२।६८॥** अहन्नित्यस्य रुः पदान्ते। अहोभ्याम्॥ दण्डि। दण्डिनी। दण्डीनि। दण्डिना। दण्डिभ्याम्॥ सुपथि। टेर्लोपः। सुपथी। सुपन्थानि॥ ऊर्क्, ऊर्ग्। ऊर्जी। ऊर्न्जि। नरजानां संयोगः॥ तत्। ते। तानि॥ यत्। ये। यानि॥ एतत्। एतानि॥ गवाक्, गवाग्। गोची। गवाञ्चि। पुनस्तद्वत् गोचा। गवाग्भ्याम्। शकृत्। शकृती। शकृन्ति॥ ददत्॥ **वा नपुंसकस्य ७।१।७९॥** अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य वा नुम् सर्वनामस्थाने। ददन्ति, ददति॥ तुदत्॥ **आच्छीनद्योर्नुम् ७।१।८०॥** अवर्णान्तादङ्गात्परो यः

---

१ "ससजुषोः—" इत्यतः 'रुः' इति वर्तते 'पदस्य' 'अन्ते' इति चात आह—**रुरित्यादि**॥

२ गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः॥
असंध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम्॥ १॥
स्वमसुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः॥
चत्वारि शेषे दशके रूपाणीति विभावय॥ २॥

३ "नाभ्यस्ताच्छतुः" इति वर्तते। तथा च "नाभ्यस्ताच्छतुः" इति निषेधः सर्वनामस्थाननिमित्तकस्य नुम एवेति तस्यैव निषेधस्य विकल्पे विधिविकल्प एव पर्यवस्यतीति फलितमाह—**वा नुमिति**॥

शतुरवयवस्तदन्तस्य नुम् वा शीनद्योः । तुदन्ती, तुदती । तुदन्ति ॥

**श्यप्श्यनोर्नित्यम् ७।१।८१** ॥ शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् शीनद्योः । पचन्ती । पचन्ति ॥ दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ धनुः । धनुषी । सान्तेति दीर्घः । नुम्विसर्जनीयेति षः । धनूंषि । धनुषा । धनुर्भ्याम् ॥ एवं चक्षुर्हविरादयः ॥ पयः । पयसी । पयांसि । पयसा । पयोभ्याम् ॥ सुपुम् । सुपुंसी ॥ सुपुमांसि ॥ अदः । विभक्तिकार्यम् । उत्वमत्वे । अमू । अमूनि । शेष पुंवत् ॥

इति हलन्तनपुंसकलिङ्गाः ॥

**स्वरादिनिपातमव्ययम् १।१।३७** ॥ स्वरादयो निपाताश्चाव्ययसञ्ज्ञाः स्युः । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । उच्चैस् । नीचैस् । शनैस् । ऋधक् । ऋते । युगपत् । आरात् । पृथक् । ह्यस् । श्वस् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । अधस् । समया । निकषा । स्वयम् । वृथा । नक्तम् । न । नञ् । हेतौ । इद्धा । अद्धा । सामि । वत् । ब्राह्मणवत् । क्षत्रियवत् ॥ सना । उपधा । सनत् । सनात् । तिरस् । अन्तरा । अन्तरेण । ज्योक् । कम् । शम् । सहसा । विना । नाना । स्वस्ति । स्वधा । अलम् ।

---

१ "नाभ्यस्ताद्" इत्यत 'शतु.' इति वर्तते "वा नपुंसकस्य" इति चेत्याह-शतुरवयव इति ॥ २ "आच्छीनद्योर्नुम्" इति 'शतुः' इति च वर्ततेऽत आह-आत परो यः शतुरवयव इति ॥

वषट् । श्रौषट् । वौषट् । अन्यत् । अस्ति । उपांशु । क्षमा । विहायसा । दोषा । मृषा । मिथ्या । मुधा । पुरा । मिथो । मिथस् । प्रायस् । मुहुस् । प्रवाहुकम् । प्रवाहिका । आर्यहलम् । अभीक्ष्णम् ॥ साकम् । सार्धम् । नमस् । हिरुक् । धिक् । अथ । अम् । आम् । प्रताम् । प्रशान् । मा । माङ् ॥ आकृतिगणोयम् ॥ च । वा । ह । अह । एव । एवम् । नूनम् । शश्वत् । युगपत् । भूयस् । कूपत् । सूपत् । कुवित् । नेत् । चेत् । चण् । यत्र । कच्चित् । नह् । हन्त । माकिम् । नकीम् । नकिः । माङ् । नञ् । यावत् । तावत् । त्वै । न्वै । द्वै । रै । श्रौषट् । वौषट् । स्वाहा । स्वधा । वषट् । तुम् । तथाहि । खलु । किल । अथो । अथ । सुष्ठु । स्म । आदह । ( उपसर्गविभक्तिस्वरप्रतिरूपकाश्च ) । अवदत्तम् । अहंयुः । अस्तिक्षीरा । अ । आ । इ । ई । उ । ऊ । ए । ऐ । ओ । औ । पशु । शुकम् । यथाकथाच । पाट् । प्याट् । अङ्ग । है । हे । भोः । अये । द्य । विषु । एकपदे । युत् । आतः ॥ चादिरप्याकृतिगणः ॥ तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । अम् । आम् कृत्वोर्थाः । तसिवती । नानाञौ । एतदन्तमप्यव्ययम् ॥ **कृन्मेजन्तः १।१।३९॥** कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात् । स्मारस्मारम् । जीवसे । पिबध्यै ॥ **क्त्वातोसुन्कसुनः १।१।४०॥** एतदन्तमव्य-

दोर्दि 'स्वरादिनिपातम्–" इत्यतः 'अव्ययम्' इति वर्तते । केवलकृत. प्रयोन् 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं न' इति परिभाषा न प्रवर्तते 'धातो आह–' दन्तमिति ॥ २ इत्का रीतिमनुसृत्याह–एतदन्तमिति ॥

यम् । क्त्वा । उदेतोः । विसृपः ॥ **अव्ययीभावश्च १।१।४१॥** अधिहरि ॥ **अव्ययादाप्सुपः २।४।८२॥** अव्ययाद्विहितस्यापः सुपश्च लुक् । तत्र शालायाम् । सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥ वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥ २ ॥ वगाहः, अवगाहः । पिधानम्, अपिधानम् ॥

इत्यव्ययानि ॥

**अथ तिङन्तम् । तत्रादौ भ्वादयः ॥** लट् लिट् लुट् लृट् लेट् लोट् लङ् लिङ् लुङ् लृङ् । एषु पञ्चमो लकारश्छन्दोमात्रगोचरः ॥ **लः कर्मणि च भावे चाकर्मकेभ्यः ३।४।६९॥** लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो भावे कर्तरि च॥ **वर्तमाने लट् ३।२।१२३॥** वर्तमानक्रियावृत्तेर्धातोर्लट् स्यात् ॥

---

१ "स्वरादिनिपातम्" इत्यत 'अव्ययम्' इति वर्तते ॥ २ "ण्यक्षत्रियार्षञितः" इत्यतो 'लुग्' इति वर्तते ॥ ३ 'लः' इति 'न ब्राह्मणं हन्यात्' इतिवत् जातावेकवचनम् । 'कर्मणि च' इति चकारेण "कर्तरि कृत्" इति सूत्रस्थं 'कर्तरि' इत्यनुकृष्यते । एवमेव 'भावे चाकर्मकेभ्यः' इत्यत्रापि । तथा च 'भावे कर्तरि चाकर्मकेभ्यः' इति वाक्यस्याकर्मकविषयत्वेन पारिशेष्याद् 'कर्मणि कर्तरि च' इति वाक्यस्य सकर्मकविषयत्वमवसीयते इत्याह— "लकाराः सकर्मकेभ्य इत्यादि" ॥ ४ क्रियायाः आरम्भतः समाप्तिपर्यन्तं ... समाप्तिं अभिव्याप्य वृत्तिमान् कालो वर्तमानकालः ... मुख्याध्ययनकाले द्वित्रिवर्षात्मकेऽपि 'अधीते' ...

अटावितौ। उच्चारणसामर्थ्याल्लस्य नेत्त्वम्। भू सत्तायाम् ॥ १ ॥ कर्तृविवक्षायां भू ल् इति स्थिते—**तिप्तस्झिसिप्थस्थमिब्वस्मस्तातांझथासाथांध्वमिड्वहिमहिङ् ३।४।७८॥** एतेऽष्टादश लादेशाः स्युः ॥ **लः परस्मैपदम् १।४।९९॥** लादेशाः परस्मैपदसंज्ञाः स्युः ॥ **तङानावात्मनेपदम् १।४।१००॥** तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः। पूर्वसंज्ञाऽपवादः ॥ **अनुदात्तङित आत्मनेपदम् १।३।१२॥** अनुदात्तेतो ङितश्च धातोरात्मनेपदं स्यात् ॥ **स्वरितञितः कर्त्रभिप्राये क्रियाफले १।३।७२॥** स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात्कर्तृगामिनि क्रियाफले। **शेषात्कर्तरि परस्मैपदम्**

---

१ "लस्य" इत्यधिक्रियतेऽत आह—"लादेशा" इति ॥ २ 'लः' इति जातावेकवचनम्। तत्र लकारस्य प्रयोगाभावात् षष्ठ्यर्थे प्रथमामाश्रित्याह—न ल[illegible]देशाः परेति ॥ ३ 'लः' इत्यनुवर्त्य 'लादेशौ तङानौ' इत्यर्थफलितम् [illegible] वर्तत[illegible]त्याहारः शानच्कानचौ चेति। चानच् शतु न लकार[illegible] विपरिणत[illegible]संज्ञेति परस्मैपदिभ्योऽपि भवति ॥४ "ङित" इति [illegible] डिद्[illegible]रभ्यामित्यादौ [illegible]त्याह—[illegible] "[illegible]आदेरप्यात्मनेपदसिद्धि.। 'व्यपदेशिवदेकस्मिन्' [illegible] स्यार्थ—" इत्यत गुणक्रियावयव[illegible] तङादिसिद्धि.॥ "भूवादयः—" इत्यतः [illegible]नेति ॥ ६ 'सः' 'संभिहृतम्,' [illegible]तः—" इत्यतः 'आत्मनेपदम्' इति [illegible] [illegible]णे तदादिवि[illegible] [illegible] इति [illegible] [illegible]णतमित्यादीनाम्' [illegible]

१।३।७८॥ आत्मनेपदनिमित्तहीनाद्धातोः कर्तरि परस्मैपदं स्यात्
**तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमाः १।४।१०१॥**
उभयोः पदयोस्त्रयस्त्रिकाः क्रमादेतत्संज्ञाः स्युः ॥ **तान्ये**
**वचनबहुवचनान्येकशः १।४।१०२॥** लब्धा
तिङस्त्रीणित्रीणि प्रत्येकमेकवचनादिसंज्ञानि स्युः ॥ २
**समानाधिकरणे स्थानिन्यपि मध्यमः**
तिङ्वाच्यकारकवाचिनि युष्मदि प्रयुज्यमानेऽप्रयुज्यमाने
**अस्मद्युत्तमः १ । ४ । १०७ ॥** तथाभूतेऽस्मद्युत्तम
**प्रथमः १।४।१०८॥** मध्यमोत्तमयोरविषये प्रथमः स्यात्
इति जाते । **तिङ्शित्सार्वधातुकम् ३ । ४ । ११**
शितश्च धात्वधिकारोक्ता एतत्संज्ञाः स्युः ॥ **कर्तरि शप्**
कर्त्रर्थे सार्वधातुके परे धातोः शप् ॥ **सार्वधातुकार्धध**
**७।३।८४॥** अनयोः परयोरिगन्ताङ्गस्य गुणः । अवादेशः

---

१ १ "कर्तरि कर्म" इत्यतः 'कर्तरि' इति वर्तते तथा च 'क... ...र्ता
...र्षङ्गितः' न तु 'कर्मकर्तरि' इति फलितमाह–कर्तरीति ... ...स्यात् ...
इतिवत् जातावे... इत्यनुवर्तते। तानीति तच्छब्दार्थमाह–... ... " इति ...
सूत्रस्थं 'कर्तरि' ...र्थमाह–तिङ्वाच्यकारकेति ... इत्यत्रापि ।
तथा च 'भावे कर्तरि च' ...आह–तथाभूत इति ॥ ५ ... पारिशेषाद्-
'कर्मणि कर्तरि च' इ...का इति ॥ ६ "धातोरेका... ...ते इत्याह–
"लकारा सकर्मकेभ्य इत्यादि" । ...च वर्ततेऽत ...र्थे ...
...ायाः आरम्भतः समाप्तिपर्य... ...र्त च वर्ततेऽत
समाप्ती अभिव्याप्य वृत्तिमान् कालो वर्तमानकालः ।
...नकाले ...वर्षात्मकेऽपि 'अधीते' ...

॥ झोऽन्तः ७।१।३॥ प्रत्ययावयवस्य झस्यान्तादेशः ।
णे । भवन्ति । भवसि । भवथः । भवथ ॥ अतो दीर्घो
७।३।१०१॥ अतोऽङ्गस्य दीर्घो यञादौ सार्वधातुके ।
। भवावः । भवामः । स भवति । तौ भवतः । ते भवन्ति ।
से । युवां भवथः । यूयं भवथ । अहं भवामि । आवा
। वयं भवामः ॥ परोक्षे लिट् ३।२।११५॥ भूतानद्यत-
र्थवृत्तेर्धातोर्लिट् स्यात् । लस्य तिबादयः ॥ परस्मैपदानां
णलतुसुस्थलथुसणल्वमाः ३।४।८२॥ लिटस्तिबादीनां
णलादयः स्युः । भू अ इति स्थिते— भुवो वुग् लुङ्-
६।४।८८॥ भुवो वुगागमः स्यात् लुङ्लिटो-
लिटि धातोरनभ्यासस्य ६।१।८॥ लिटि परे-
२।... १२॥ ... ...
आदिभूतादचः परस्य

१ अतीतरात्रेः पश्चार्धेनागामिन्याः पूर्वार्धेन च ... ६ ।
ऽनद्यतनः ॥ २ "भविष्यति गम्यादयः" इत्यतः 'भविष्यति' इति वर्त
आह-भवि... धात्ववयवस्यैकाचः ... ॥ ३ "गतोरेकाचः—" इत्यत 'धातोः' इति
तेऽत ...यस्य । ...दशित' इत्यनुवर्तते पञ्चमीविपर्
...स्यात् ... प्रथमस्य द्वे स्त ति ॥ हरिभ्यामि
। "आयनेयीनीयिय—' इत्यत 'प्रत्ययादीनाम्' ... "सः स्यार्धे—"
गुणप्रत्ययावयवस्येति ॥ तेन 'उज्झिता' इत्यत्र ... इत्यन...
'अधिकृतम्, "तुरुस्तुगम्यम" ...
शिनणे तदादिविधि...

भूव्भूव् अ इति स्थिते ॥ पूर्वोऽभ्यासः ॥ ६

१ । ४ ॥ अत्र ये द्वे विहिते तयोः पूर्वोऽभ्याससञ्ज्ञः स्यात् ॥ **हलादिः शेषः ७ । ४ । ६० ॥** अभ्यासस्यादिर्हल् [illegible] अन्ये हलो लुप्यन्ते । इति वलोपः ॥ **ह्रस्वः ७।४।५९ ॥** [illegible] सस्याचो ह्रस्वः स्यात् ॥ **भवतेरः ७ । ४ । ७३ ॥** भव[illegible] सोकारस्य अः स्याल्लिटि ॥ **अभ्यासे चर्च ८ । ४ । ५४** अभ्यासे झलां चरः स्युर्जशश्च । झशां जशः खयां चर इति विवे[illegible] बभूव । बभूवतुः । बभूवुः ॥ **लिट् च ३।४।११५॥** लिडादेशस्ति[illegible] र्धधातुकसंज्ञः ॥ **आर्धधातुकस्येड्वलादेः ७ । २ । ३५** वलादेरार्धधातुकस्येडागमः स्यात् । बभूविथ । बभूवथुः । बभूव[illegible]

---

१ "एकाचो द्वे प्रथमस्य" इत्यतः 'द्वे' इत्यनुवर्तनेऽत आह-अ[illegible] ये द्वे विहिते इति ॥ २ [illegible] अत्रलोपो[illegible]स्य" इत्यतः 'अभ्या[illegible]सस्य' इति वर्तते । शेषः एतत्संज्ञाः स्युः ॥ **कर्तरि** [illegible] कावस्थानवाचीत्यभिप्रेत्य परे धातोः शप् ॥ **सार्वधातुका[illegible]** **७।३।८४॥** अनयोः परयोरिगन्ताङ्गस्य गुणः । अवा[illegible]

---

१ १ "कर्तरि कर्म" इत्यतः 'कर्तरि' इति वर्तते तथा च '[illegible]' [illegible] कार्षजितः' न तु 'कर्मकर्तरि' इति प[illegible]त्याह-कर्त[illegible] इतिवत् जातावेकत्यनुवर्तते। तानीति तच्च इति कर्मणि घञ् । शेषशब्दश्चान्यनि[illegible] सूत्रस्य 'कर्तरि' [illegible]त्याह-अभ्यासस्येत्यादि ॥ शेषश्चादिभूतस्यैव तथा [illegible] सम्भवे । हलोऽभ्यासादिभूतत्वासम्भवे तु 'आत' इत्यादौ द्वितीयहल[illegible] कर[illegible] शेषत्वम्, किं तु निवृत्तिरेव तस्याभ्यासादित्वाभावात् इत्यभिप्रायः ॥ ३ "लकाराः [illegible] लोपः-" इत्यतोभ्यासस्येति वर्तते । ह्रस्वपदश्रुत्या षष्ठ्यन्तस्याच्पदस्य [illegible]मभिप्रेत्याह-अभ्यासस्याच इति ॥ ४ "अत्र लोपः-" इत्यतो[illegible]

बभूव । बभूविव । बभूविम ॥ **अनद्यतने लुट् ३ । ३ । १५ ॥** भविष्यत्यनद्यतनेऽर्थे धातोर्लुट् ॥ **स्यतासी ऌलुटोः ३।१।३३॥** धातोः स्यतासी एतौ प्रत्ययौ स्तो ऌलुटोः परतः । शबाद्यपवादः । ऌ इति ऌङ्लृटोर्ग्रहणम् ॥ **आर्धधातुकं शेषः ३ ।४।११४ ॥** तिङ्शिद्भ्योऽन्यो धातोरिति विहितः प्रत्यय एतत्संज्ञः स्यात् । इट् ॥ **लुटः प्रथमस्य डारौरसः २।४।८५॥** डित्त्वसामर्थ्यादभस्यापि टेर्लोपः । भविता ॥ **तासस्त्योर्लोपः ७ । ४ । ५० ॥** तासेरस्तेश्च सस्य लोपः स्यात्सादौ प्रत्यये परे ॥ **रि च ७ । ४ । ५१॥** रादौ प्रत्यये तथा । भवितारौ । भवितारः । भवितासि । भवितास्थः। भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः ॥ **ऌट् शेषे च ३ । ३ । १३ ॥** भविष्यदर्थाद्धातोर्ऌट् क्रियार्थायां क्रियाया सत्या-

---

१ अतीतरात्रे. पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितः कालोऽद्यतनस्तद्भिन्नोऽनद्यतनः ॥ २ "भविष्यति गम्यादयः" इत्यत 'भविष्यति' इति वर्ततेऽत आह-भविष्यत्यनेति ॥ ३ "धातोरेकाच–" इत्यतः 'धातो' इति वर्ततेऽत आह–धातोरित्यादि ॥ ४ 'तिङ्शित्' इत्यनुवर्तते पञ्चमीविपरिणत-मित्याह–तिङ्शिद्भ्योऽन्य इति ॥ धातोरितीति ॥ हरिभ्यामित्यादौ गुणवारणाय 'धातो' इत्यनुवर्तनीयमिति भाव ॥ ५ "स स्यार्ध–" इत्यत 'सः सि' इति वर्तते, तदादिविधिश्च विशेषणेऽत आह–सस्येति ॥ ६ 'सः' इति "तासस्त्योर्लोप." इति च वर्ततेऽत आह–प्रत्यये तथेति ॥ ७ "भविष्यति गम्यादयः" इत्यतः 'भविष्यति' इति "तुमुन्ण्वुलौ" इत्यतः 'क्रियार्था[illegible]र्थादिति ॥

मलत्या वा । स्यः । इट् । भविष्यति । भविष्यतः । भविष्यन्ति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः ॥ **लोट् च ३ । ३ । १६२** ॥ विध्याद्यर्थेषु धातोर्लोट् ॥ **आशिषि लिङ्लोटौ ३ । ३ । १७३ ॥ एरुः ३।४।८६॥** लोट इकारस्य उः । भवतु ॥ **तुह्योस्तातङ्ङाशिष्यन्यतरस्याम् ७। १ । ३५ ॥** आशिषि तुह्योस्तातङ् वा । परत्वात्सर्वादेशः । भवतात् ॥ **लोटो लङ्वत् ३ । ४ । ८५ ॥** लोटस्तामादयस्सलोपश्च ॥ **तस्थस्थमिपां तान्तन्तामः ।३।४।१०५ ॥** ङितश्चतुर्णां तामादयः क्रमात्स्युः । भवताम् । भवन्तु ॥ **सेर्ह्यपिच्च ३।४।८७॥** लोटः सेर्हिः सोऽपिच्च ॥ **अतो हेः ६।४।१०५॥** अतः परस्य हेर्लुक् । भव । भवतात् । भवतम् । भवत ॥ **मेर्निः ३।४।८९।**

---

१ "विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु" इति वर्ततेऽत आह-**विध्याद्यर्थेष्विति॥** २ "लोटो लङ्वत्" इत्यतः 'लोटः' इति वर्तते "ए-" इति "आमेतः" इति सूत्रारम्भसामर्थ्यात् 'इ' शब्दस्यैव षष्ठी, न 'ए' शब्दस्य अत आह-**लोट इति॥** ३ सर्वादेशत्वमन्तरा प्रत्यये ङित्त्वस्याप्राप्त्या गुणवृद्धिप्रतिषेधाद्यर्थत्वाभावे ङित्त्वस्य वैयर्थ्यापत्त्याऽनेकालसूत्रस्येहोत्सर्गत्वाभावेनेति भाव. ॥ ४ "तत्र तस्येव" इति सूत्रेण षष्ठ्यन्ताद् वतिप्रत्ययाङ्गीकारेण 'लङ इव' इत्यर्थेन लङ्स्थानिककार्याणामेवातिदेश', न तु लङ्निमित्तककार्याणामित्यभिप्रेत्याह-**तामादय इति** ॥ ५ "नित्यं ङितः" इत्यतः 'ङितः' इति वर्ततेऽत आह-**ङित इत्यादि** ६ "लोटो लङ्वत्" इत्यतः 'लोटः' इति वर्ततेऽत आह-**लोट इति** ॥ ७ "च्विणो ल... द्वित्रिनपातमकेऽारस्येति ॥ ५ " झलां ... " ॥ ... आह-**जशश्चेति**

लोटो मेर्निः स्यात् ॥ **आडुत्तमस्य पिच्च ३।४।९२॥** लोडुत्तमस्याट् स्यात् पिच्च। हिन्योरुत्वं न इकारोच्चारणसामर्थ्यात् ॥ **ते प्राग्धातोः १।४।८०॥** ते गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्याः ॥ **आनि लोट् ८।४।१६॥** उपसर्गस्थान्निमित्तात्परस्य लोडादेशस्यानीत्यस्य नस्य णः स्यात्। प्रभवाणि। ( दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः )। दुःस्थितिः। दुर्भवानि। ( अन्तश्शब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम् )। अन्तर्भवाणि ॥ **नित्यं ङितः ३।४।९९॥** सकारान्तस्य ङिदुत्तमस्य नित्य लोपः। अलोऽन्त्यस्येति सलोपः। भवाव। भवाम ॥ **अनद्यतने लङ् ३।२।१११॥** अनद्यतनभूतार्थवृत्ते र्धातो

---

१ "लोटो लङ्वत्" इति सूत्रात् 'लोट.' इति वर्तते ऽत आह–लोट इति ॥
२ "लोटो लङ्वत्" इत्यत 'लोटः' इति वर्तते ऽत आह–लोडिति ॥
३ सामर्थ्यादिति ॥ उत्वादेशस्येष्टत्वे 'हु, नु' इत्येव वदेदिति भाव. ॥
४ तच्छब्दस्य पूर्वप्रक्रान्तपरामर्शकत्वेन गत्युपसर्गसंज्ञकपरामर्शकत्वमित्याह–गत्युपसर्गसंज्ञका इति ॥ ५ "उपसर्गादसमासेऽपि" इत्यत्र 'उपसर्गात्' इति तत्स्थपरं वर्तते "रषाभ्यां नो ण.–" इति च ॥ 'लोट' इति लुप्तषष्ठ्यन्तम् इति सकलमभिप्रेत्याह–उपसर्गस्थादिति ॥ ६ "इतश्च लोप.–" इत्यत 'लोप' इति 'स उत्तमस्य' इति च वर्तते 'विशेषणे तदन्तविधिरित्याह–सकारान्तस्येति ॥ ७ 'धातो' 'भूते' इत्यधिकृते ॥ अनन्तरगतागामिनिशीथान्तरालक्षणो लोऽद्यतन. तद्भिन्नोऽनद्यतन इत्यभिप्रेत्याह–अनद्यतनभूतेति ॥

ऌङ् स्यात् ॥ **लुङ्लङ्लृङ्क्ष्वडुदात्तः ६।४।७१॥** एष्वङ्गस्याट् ॥ **इतश्च ३।४।१००॥** ङितो लस्य परस्मैपदमिकारान्तं यत्तदन्तस्य लोपः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥ **विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ् ३।३।१६१॥** एष्वर्थेषु धातोर्लिङ् ॥ **यासुट् परस्मैपदेषूदात्तो ङिच्च ३।४।१०३ ॥** लिङः परस्मैपदानां यासुडागमो ङिच्च ॥ **लिङः सलोपोऽनन्त्यस्य ७।२।७९॥** सार्वधातुकलिङोऽनन्त्यस्य सस्य लोपः । इति प्राप्ते । **अतो येयः ७।२।८०॥** अतः परस्य सार्वधातुकावयवस्य यास् इत्यस्य इय् । गुणः ॥ **लोपो व्योर्वलि ६।१।६६॥** भवेत् । भवेताम् ॥ **झेर्जुस् ३।४।१०८॥** लिङो झेर्जुस् स्यात् । भवेयुः । भवेः । भवेतम् । भवेत । भवेयम् । भवेव । भवेम ॥ **लिङाशिषि**

---

१ "अङ्गस्य" इत्यधिक्रियते ॥ २ "इतश्च लोप" इत्यतः 'लोपः-' 'परस्मैपदेषु' इति "नित्य ङितः" इति "लस्य" इति च वर्तते॰त आह-ङितो लस्येति ॥ ३ विधिः प्रेरणम् । निमन्त्रण नियोगकरणम् । आमन्त्रण कामचारानुज्ञा । अधीष्टं सत्कारपूर्वको व्यापार. । इत्यग्रे वक्ष्यते ॥ ४ प्रवर्तनाया लिङ्लेव सुवचः ॥ ५ "धातो." इत्यधिक्रियते ॥ ६ "लिङ. सीयुट्" इत्यतः 'लिङ' इति वर्तते॰त आह-लिङ इति ॥ ७ "रुदादिभ्यः-" इत्यत. 'सार्वधातुके' इति वर्तते॰त आह-सार्वेति ॥ ८ 'यास्' इति लुप्तषष्ठ्यन्तम् । सधिरार्षः । "रुदादिभ्य-" इत्यत. 'सार्वधातुके' इति वर्तते॰त आह-सार्वेति ॥ ९ "लिङ. सीयुट्" इत्यतो 'लिङः' इति वर्तते॰त आह-लिङ इति ॥

३।४।११६॥ आशिषि लिङस्तिङार्धधातुकसञ्ज्ञः स्यात् ॥ किदा-शिषि ३।४।१०४॥ आशिषि लिङो यासुट् कित् । स्कोः सयो-गाद्योरिति सलोपः ॥ क्ङिति च १।१।५॥ गित्किङ्निमित्ते इग्लक्षणे गुणवृद्धी न स्तः । भूयात् । भूयास्ताम् । भूयासुः । भूयाः। भूयास्तम् । भूयास्त । भूयासम् । भूयास्व । भूयास्म ॥ लुङ् ३।२।११०॥ भूतार्थे धातोर्लुङ् स्यात्॥माङि लुङ् ३।३।१७५॥ सर्वलकारापवादः ॥ स्मोत्तरे लङ् च ३।३।१७६॥ स्मोत्तरे माङि लङ् स्याच्चाल्लुङ् ॥ च्लि लुङि ३।१।४३॥ शबाद्यपवादः । च्लेः सिच् ३।१।४४॥ इचावितौ ॥ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २।४।७७॥ एभ्यः सिचो लुक् स्यात् । गापाविहेणा-देशपिबती गृह्येते ॥ भूसुवोस्तिङि ७।३।८८॥ भूसू एतयोः सार्वधातुके तिङि परे गुणो न । अभूत् । अभूताम् । अभूवन् ।

---

१ "आर्धधातुकं शेषः" इत्यतः 'आर्धधातुकम्' इति वर्तते 'लिङ्' षष्ठ्यर्थे प्रथमेत्याह–लिङस्तिङिति ॥ २ "यासुट् परस्मैपदेषु–" इत्यतः 'यासुट्' इति वर्तते ऽत आह–लिङो यासुट् इति ॥ ३ "इको गुणवृद्धी" इति "न धातुलोप–" इत्यतो 'न' इति च वर्तते ऽत आह–गित्किदिति ॥ ४ 'धातोः' 'भूते' इत्यधिक्रियेते अत आह–भूतार्थे इति ॥ ५ चकारेण 'लुङ्' इत्यनुवर्तते । 'स्मोत्तरे' इति बहुव्रीहिणाऽन्यपदार्थे 'माङि' इति लब्धमित्याह–स्मोत्तरे इत्यादि ॥ ६ "ण्यक्षत्रियार्ष–" इत्यतः 'लुक्' इति वर्तते ऽत आह–लुगिति॥ ७ "मिदेर्गुणः" इत्यतः 'गुणः' इति "नाभ्यस्तस्याचि पिति–" इत्यतः 'न सार्वधातुके' इति च वर्तते ऽत आह–'सार्वधातुके तिङीति ॥

अभूः । अभूतन् । अभूत । अभूवम् । अभूव । अभूम ॥ **न माङ्योगे ६।४।७४॥** अडाटौ न स्तः । मा भवान् भूत् । मा स्म भवत् । मा स्म भूत् ॥ **लिङ्निमित्ते लृङ् क्रियातिपत्तौ ३ । ३ । १३९ ॥** हेतुहेतुमद्भावादि लिङ्निमित्तं, तत्र भविष्यत्यर्थे लृङ् स्यात् क्रियाया अनिष्पत्तौ गम्यमानायाम् । अभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः । अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम । सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यत इत्यादि ज्ञेयम् ॥ अत सातत्यगमने ॥ २ ॥ अतति ॥ **अत आदेः ७।४।७०॥** अभ्यासस्यादेरतो दीर्घः स्यात् । आत । आततुः । आतुः । आतिथ । आतथुः । आत । आत । आतिव । आतिम । अतिता । अतिष्यति । अततु । **आडजादीनाम् ६।४।७२ ॥** अजादेरङ्गस्याट् लुङ्लङ्लृङ्क्षु । आतत् । अतेत् । अत्यात् । अत्यास्ताम् । लुङि सिचि इडागमे कृते- ॥ **अस्तिसिचोऽपृक्ते ७।३।९६॥**

---

१ "लुङ्लङ्लृङ्क्षु-" इत्यतः 'अट्' इति "आडजादीनाम्" इति च वर्ततेऽत आह-**अडाटाविति** ॥ २ "हेतुहेतुमतोर्लिङ्" इत्याद्युक्तेर्हेतुहेतुमद्भावादि लिङ्निमित्त "भविष्यति मर्यादावचने-" इत्यत. 'भविष्यति' इति वर्ततेऽत आह-**हेतुहेतुमद्भावादीति** ॥ ३ "अत्र लोपोऽभ्यासस्य" इत्यत. 'अभ्यासस्य' इति "दीर्घं इण किति" इत्यतो 'दीर्घ' इति च वर्ततेऽत आह-**अभ्यासस्येति** ॥ ४ "लुङ्लङ्लृङ्क्षु-" इत्यनुवर्तते 'अङ्गस्य' इति चात आह-**अजादेरङ्गस्येति** ॥

विद्यमानात् सिचोऽस्तेश्च परस्यापृक्तस्य हल ईडागमः ॥ इट ईटि ८ । २ । २८ ॥ इटः परस्य सस्य लोपः स्यादीटि परे । ( सिजलोप एकादेशे सिद्धो वाच्यः ) । आतीत् । आतिष्टाम् ॥ सिजभ्यस्तविदिभ्यश्च ३ । ४ । १०९॥ सिचोऽभ्यस्ताद्विदेश्च परस्य ङित्संबन्धिनो झेर्जुस् । आतिषुः । आतीः । आतिष्टम् । आतिष्ट । आतिषम् । आतिष्व । आतिष्म । आतिष्यत् ॥ षिध गत्याम् ॥ ३ ॥ ह्रस्वं लघु १।४।१० ॥ संयोगे गुरु १।४।

---

१ "अस्तिसिचः–" इति द्विसकारको निर्देशः । 'अस्तेः सकारान्तात्' इति भाष्येऽस्ति ग्रहणं सिचोऽप्युपलक्षणम् । द्विपदं चानेकोपलक्षणं "तस्मान्नुड् द्विहलः" इत्यत्रेव । नागेशोपदर्शिते "अस्तिस्सिच.–" इत्येव पाठे तु वैदिकसम्प्रदायसिद्धतकारोत्तरवर्तिन इकारस्य संयोगपरत्वेन गुरुत्वापत्ति । अस्मदुपदर्शितपाठे तु सयोगपरत्वेन गुरुत्वमकारस्य सर्वमतसाधारण वर्तत एव । तथा च–'अस् स्' इति लुप्तपञ्चमीके पदे । 'स्ति' इति सप्तम्यन्तम् । 'सिचः' इति पञ्चम्यन्तम् । 'स्' इति लुप्तपञ्चम्यन्तम् । 'अस्' इति लुप्तपञ्चम्यन्तस्य 'सिच.' इति पञ्चम्यन्तस्य च विशेषणमिति तदन्तविधिरिति 'सकारान्तादस्तेः सिचश्च' इत्यर्थे सकारान्तत्वविशेषणमविकृतसकारत्वबोधनार्थम् । तत्फलितमाह–विद्यमानादित्ति ॥ "उतो वृद्धि –" इत्यतो 'हलि' इति "ब्रुव ईट्" इत्यतः 'ईट्' इति च वर्तते । तदाह–हल ईडागम इति ॥
२ "सयोगान्तस्य–" इत्यतः 'लोपः' इति "रात्सस्य" इत्यतः 'सस्य' इति च वर्ततेऽत आह–सस्य लोप इति ॥ ३ तेन सलोपस्यासिद्धत्वेन दीर्घप्रवृत्त्यभावो नेति भावः ॥ ४ "नित्य ङितः" इत्यतः 'ङितः' इति "झेर्जुस" इति च वर्ततेऽत आह–ङित्संबन्धिन इत्यादि ॥

११ ॥ संयोगे परे ह्रस्वं गुरु स्यात् ॥ **दीर्घं च ७।४।१७** ॥ गुरु स्यात् ॥ **पुगन्तलघूपधस्य च ७।३।८६** ॥ पुगन्तस्य लघूपधस्य चांगस्येको गुणः सार्वधातुकार्धधातुकयोः । धात्वादेरिति सः । सेधति । षत्वम् । सिषेध ॥ **असंयोगाल्लिट् कित् १।२।५** ॥ असंयोगात्परोऽपि लिट् कित् स्यात् । सिषिधतुः । सिषिधुः । सिषेधिथ । सिषिधथुः । सिषिध । सिषेध । सिषिधिव । सिषिधिम । सेधिता । सेधतु । असेधत् । सेधेत् । सिध्यात् । असेधीत् । असेधिष्यत् । एवम् ॥ चिती सञ्ज्ञाने ॥ ४ ॥ शुच शोके ॥ ५ ॥ गद व्यक्तायां वाचि ॥ ६ ॥ गदति ॥ **नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु च ७ । ४ । १७** ॥ उपसर्गस्थान्निमित्तात्परस्य नेर्णो गदादिषु परेषु । प्रणिगदति ॥ **कुहोश्चुः ७।४।६२**॥

---

१ "ह्रस्वं लघु" इत्यतः 'ह्रस्वम्' इति वर्तते ॥ २ "संयोगे गुरु" इत्यतः 'गुरु' इति वर्तते ॥ ३ "अङ्गस्य" इत्यधिक्रियते । "मिदेर्गुणः" इत्यतः 'गुणः' इति वर्तते "सार्वधातुकार्धधातुकयोः" इति च । गुणपदश्रुत्या च षष्ठ्यन्तम् 'इकः' इति पदमुपतिष्ठते । इति सकलमभिप्रेत्याह–अङ्गस्येक इत्यादि ॥ ४ "सार्वधातुकमपित्" इत्यतः 'अपित्' इति वर्तते ॥ ५ यद्यपि परत्वाद् गुणो न्याय्यः, तथापि कृतेऽपि गुणे, अकृतेऽपि गुणे कित्त्वं प्राप्नोत्येवेति कृताकृतप्रसंगित्वेन नित्यत्वात्परमपि गुण बाधित्वा कित्त्वमेव भवति । जाते च कित्त्वे "क्ङिति च" इति गुणनिषेधः ॥ ६ "रषाभ्यां नो णः–" इति वर्तते "उपसर्गादसमासेऽपि–" इत्यतः 'उपसर्गात्' इति चात आह–उपसर्गस्थादिति ॥

अभ्यासकवर्गहकारयोश्चवर्गादेशः ॥ **अत उपधायाः ७।२।११६॥** उपधाया अतो वृद्धिः स्यात् ञिति णिति च प्रत्यये परे । जगाद । जगदतुः । जगदुः । जगदिथ । जगदथुः । जगद ॥ **णलुत्तमो वा ७।१।९१ ॥** उत्तमो णल् वा णित्स्यात् । जगाद, जगद । जगदिव । जगदिम । गदिता । गदिष्यति । गदतु । अगदत् । गदेत् । गद्यात् ॥ **अतो हलादेर्लघोः ७ । २ । ७ ॥** हलादेर्लघोरकारस्य वृद्धिर्वेडादौ परस्मैपदे सिचि । अगादीत्, अगदीत् । अगदिष्यत् । णद अव्यक्ते शब्दे ॥ ७ ॥ **णो नः ६।१।६५ ॥** धात्वादेर्णस्य नः । णोपदेशास्त्वनर्द्नाटिनाथ्नाध्नन्दनक्कनॄनृतः ॥ **उपसर्गादसमासेपि णोपदेशस्य ८।४।१४॥** उपसर्गस्थान्निमित्तात्परस्य णोपदेशस्य धातोर्नस्य णः । प्रणदति । प्रणिनदति । नदति । ननाद ॥ **अत एकहल्मध्येऽनादेशादेर्लिटि ६।४।१२०॥** लिण्निमित्तादेशादिकं न भवति यदङ्गं तदवयवस्यासंयुक्तहल्मध्यस्थस्यात

---

१ "अत्र लोपोऽभ्यासस्य" इत्यतः 'अभ्यासस्य' इति वर्तते ॥ २ "मृजेर्वृद्धिः" इत्यतः 'वृद्धिः' इति "अचो ञ्णिति" इत्यतो 'ञ्णिति' इति च वर्तंतेऽत आह–वृद्धिरित्यादि ॥ ३ "गोतो णित्" इत्यतो "णित् इति वर्तते ॥ ४ "सिचि वृद्धिः परस्मैपदेषु" इति "नेटि" इत्यत. 'इटि' इति "ऊर्णोतेः–" इत्यतः 'विभाषा' इति च वर्तंतेऽत आह–वृद्धीति ॥ ५ "धात्वादेः षः सः" इत्यतः 'धात्वादेः' इति वर्तते ॥ ६ "रषाभ्यां नो णः–" इति वर्तते ॥

ऐत्त्वमभ्यासलोपश्च किति लिटि। नेदतुः । नेदुः॥ **थलि च सेटि ६।४।१२१ ॥** प्रागुक्तं स्यात्। नेदिथ। नेदथुः नेद, ननाद । ननद। नेदिव । नेदिम । नदिता । नदिष्यति । नदतु । अनदत् । नदेत् । नद्यात् । अनादीत्, अनदीत् । अनदिष्यत् ॥ टुनदि समृद्धौ ॥ ८॥ **आदिर्ञिटुडवः १।३।५ ॥** उपदेशे धातोराद्या एते इतः स्युः ॥ **इदितो नुम् धातोः ७।१।५८ ॥** नन्दति । ननन्द। नन्दिता। नन्दिष्यति। नन्दतु ।अनन्दत्।नन्देत् ।नन्द्यात्। अनन्दीत्।अनन्दिष्यत्॥ अर्च पूजायाम् ॥९॥ अर्चति॥ **तस्मान्नुड् द्विहलः ७।४।७१॥** द्विहलो धातोर्दीर्घीभूतात्परस्य नुट् स्यात्। आनर्च । आनर्चतुः । अर्चिता । अर्चिष्यति । अर्चतु । आर्चत् । अर्चेत् । अर्च्यात् । आर्चीत् । आर्चिष्यत् ॥ व्रज गतौ ॥ १० ॥ व्रजति । वव्राज । व्रजिता। व्रजिष्यति । व्रजतु । अव्रजत् । व्रजेत् । व्रज्यात् ॥ **वदव्रजहलन्तस्याचः ७।२।३ ॥** एषामचो वृद्धिः सिचि परस्मैपदेषु । अव्राजीत् ।

---

१ "ध्वसोरेत्-" इत्यत 'एद् अभ्यासलोपश्च' इति वर्तते "गमहनजनखनघसाम्-" इत्यतः 'क्ङिति' इति च । तत्र लिटो ङित्त्वस्यासंभवात् 'किति' इत्येवान्वेतीत्याह-एत्त्वमिति ॥ २ "भूवादयः-" इत्यस्माद् 'धातु' पदम् "उपदेशेऽज्-" इत्यत 'उपदेशे इत्' इति चानुवर्ततेऽत आह-उपदेशे इति ॥ ३ 'तस्मात्' इति तच्छब्देन "अत आदेः" इति सूत्रविहितदीर्घादेशो गृह्यतेऽत आह-दीर्घीभूतादिति ॥ अत्र द्विपदमनेकोपलक्षणम् । तेन ऋच्छधातोर्गुणादेशे कृते रेफचकारच्छकाररूपव्यञ्जनत्रयवत्त्वेऽपि आनर्च्छ इत्यादौ नुट्सिद्धिः । ४ "सिचि वृद्धिः परस्मैपदेषु" इति वर्ततेऽत आह-वृद्धिरित्यादि॥

अत्रजिष्यत् ॥ कटे वर्षावरणयोः ॥ ११ ॥ कटति । चकाट । चकटतुः । कटिता । कटिष्यति । कटतु । अकटत् । कटेत् । कट्यात् ॥ **ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ७।२।५ ॥** हमयान्तस्य क्षणादेर्ण्यन्तस्य श्वयतेरेदितश्च वृद्धिर्नेडादौ सिचि । अकटीत् । अकटिष्यत् ॥ गुपू रक्षणे ॥ १२ ॥ **गुपूधूपविच्छिपणिपनिभ्य आयः ३।१।२८ ॥** एभ्य आयः प्रत्ययः स्यात् स्वार्थे ॥ **सनाद्यन्ता धातवः ३।१।३२ ॥** सनादयः कमेर्णिङन्ताः प्रत्यया अन्ते येषां ते धातुसञ्ज्ञकाः । धातुत्वाल्लडादयः । गोपायति ॥ **आयादय आर्धधातुके वा ३।१।३१ ॥** आर्धधातुकविवक्षायामायादयो वा स्युः । ( कास्यनेकाच आम् वक्तव्यः ) । णिचि

---

१ "सिचि वृद्धिः परस्मैपदेषु" इति वर्तते "नेटि" इति चात आह—**वृद्धिर्न स्यादि**॥ २ "प्रत्ययः" इत्यधिक्रियते ।'अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति'॥ ३ सनादयो द्वादश । सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब्णिज्यङौ तथा । यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥ इत्युक्तेः । ४ स्यतास्याद्यन्तानां धातुत्ववारणाय "भूवादयो धातवः" इत्युत्तरम् "सनाद्यन्ता—" इति सूत्रमकृत्वा "कमेर्णिङ्" इत्युत्तरमेवेदं सूत्रं कृतमित्याह—**कमेर्णिङन्ता इति** ॥ अत्र 'भूवादयश्च' इत्यस्य करणे "अनुदात्तङित—" इत्यादौ धातुपदोच्चारणं कर्तव्यं स्यात् ॥ ५ 'कास्यनेकाजग्रहणं चुलुम्पाद्यर्थम्' इति वार्तिकस्य 'प्रत्ययग्रहणमपनीयानेकाज्ग्रहणं कर्तव्यम्' इत्यर्थे भट्टोजिदीक्षितोक्ते स्वस्यानास्था सूचयितुं तदनुक्त्वा गुरुलिखितां वार्तिकानुपूर्वीं लिखति—**कास्यनेकेति** ॥

आस्कासोराम्विधानान्मस्य नेत्त्वम् ॥ **अतो लोपः ६।४।४८ ॥** आर्धधातुकोपदेशे यदन्तं तस्यातो लोप आर्धधातुके ॥ **आमः २।४।८१ ॥** आमः परस्य लुक् ॥ **कृञ् चानुप्रयुज्यते लिटि ३।१।४० ॥** आमन्ताल्लिट्पराः कृभ्वस्तयोऽनुप्रयुज्यन्ते । तेषां द्वित्वादि ॥ **उरत् ७।४।६६ ॥** अभ्यासऋवर्णस्यात् प्रत्यये । रपरः । हलादिः शेषः । वृद्धिः । गोपायाञ्चकार । द्वित्वात्परत्वाद्यणि प्राप्ते-। **द्विर्वचनेऽचि १ । १ । ५९ ॥** द्वित्वनिमित्तेऽचि अच

१ मकारस्येत्संज्ञायाम् आकारद्वयस्य सवर्णदीर्घे सत्याम्विधानं व्यर्थमेव स्यादिति भावः ॥ वस्तुतस्तु ' आमोऽमित्त्वमदन्तत्वात् ' इत्येव वरम् ॥ २ "आर्धधातुके" इत्यधिकृतम् । "अङ्गस्य" इति च । तद्विशेषणत्वेन तदन्तविधिरित्याह-**अदन्तमिति** ॥ अलोन्त्यपरिभाषालब्धमर्थमाह-**तस्यात इति** ॥ ३ " ण्यक्षत्रियार्ष-" इत्यत. ' लुक् ' इति वर्तते ॥ ४ " कास्प्रत्ययात्-" इत्यतः ' आम् ' इति पञ्चमीविपरिणतं वर्तते । अत्र ' कृञ् ' पद न धातुपरम् । " आम्प्रत्ययवत्-" इति सूत्रे कृञ्ग्रहणसामर्थ्यात्, कि तु प्रत्याहारपरमेवेति प्रत्याहारघटकाश्च कृभ्वस्तय एव । अनुप्रग्रहणं व्यवहितविपर्यस्तप्रयोगनिवृत्त्यर्थमिति वार्तिकमतम् । भाष्यकारस्तु व्यवहितप्रयोगमपीच्छति ॥ तन्मते ' उक्षांप्रचक्रुर्नगरस्य मार्गान् ' ' बिभयाप्रचकारासौ ' इति भट्टिप्रयोगः 'प्रभ्रंशयां यो नहुष चकार' ' तं पातयां प्रथममास' इत्यादिप्रयोगा अपि साधव एवेति बोध्यम् । इति सकलमभिप्रेत्याह-**आमन्तादिति** ॥ ५ " अत्र लोप - " इत्यतः ' अभ्यासस्य ' इति वर्तते । " अङ्गस्य " इत्यधिक्रियते । तस्य प्रत्ययाक्षेपकत्वमित्याह-**अभ्यासेति** ॥ ६ **यणीति** ॥ वृद्धेरप्युपलक्षणम् ॥ ७ "स्थानिवत्- " इत्यतः 'आदेश. ' इति "अचः परस्मिन्-" इत्यतः ' अचः ' इति "न पदान्त-" इत्यतः ' न ' इति वर्तते । द्विर्वचनशब्दे च तन्त्रमावृत्तिर्वा इत्याह-**द्वित्वेति** ॥

आदेशो न द्वित्वे कर्तव्ये । गोपायाञ्चक्रतुः ॥ **एकाच उपदेशेऽनुदात्तात् ७ । २ । १०** ॥ उपदेशे[1] यो धातुरेकाजनुदात्तश्च तत आर्धधातुकस्येण्न । ऊद्दन्तैर्यौतिरुक्ष्णुशीस्नुनुक्षुश्विडीङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥ कान्तेषु शक्लेकः । चान्तेषु पच्मुच्रिच्वच्विच्सिचः षट् । छान्तेषु प्रच्छेकः । जान्तेषु त्यज्निजिर्भज्भञ्ज्भुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्ज्विजिर्स्वञ्ज्सञ्जसृजः पञ्चदश । दान्तेषु अद् क्षुद् खिद् छिद् तुद् नुद् पद्यभिद्विद्यतिर्विनद्विन्द्शद्सद्स्विद्यस्कन्द्हदः षोडश । धान्तेषु क्रुध्क्षुध्बुध्यबन्ध्युध्रुध्राध्व्यध्साध्शुध्सिध्या एकादश । नान्तेषु मन्यहनौ द्वौ । पान्तेषु आप्छुप्क्षिप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश । भान्तेषु यभ्रभ्लभस्त्रयः । मान्तेषु गम्नम्यम्रमश्चत्वारः । शान्तेषु क्रुश्दश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश ।षान्तेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्या एकादश ॥ सान्तेषु घस्वसती द्वौ । हान्तेषु दह्दिह्दुह्नह्मिह्रुह्लिह्वहोऽष्टौ । अनुदात्ता हल-

---

1 'उपदेशे' इति देहलीदीपकन्यायेनोभयान्वयि । "नेड् वशि–" इत्यत 'न, इट्' इति वर्तते । सोऽय निषेध. 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन "आर्धधातुकस्येड्वलादे" इत्यस्यैव बाधक, न तु "तीपसह–" इत्यादिविहितस्येटः इत्यभिप्रेत्याह–उपदेश इति॥

न्तेषु धातवस्त्र्यधिकं शतम् ॥ गोपायाञ्चकर्थ । गोपायाञ्चक्रथुः । गोपायाञ्चक्र । गोपायाञ्चकार, गोपायाञ्चकर । गोपायाञ्चकृव । गोपायाञ्चकृम । गोपयाम्बभूव । गोपायामास । जुगोप । जुगुपतुः । जुगुपुः ॥ **स्वरतिसूतिसूयतिधूञूदितो वा ७।२।४४** ॥ स्वरत्यादेरूदितश्च परस्य वलादेरार्धधातुकस्येड् वा स्यात् । जुगोपिथ, जुगोप्थ । गोपायिता, गोपिता, गोप्ता । गोपायिष्यति, गोपिष्यति, गोप्स्यति । गोपायतु । अगोपायत् । गोपायेत् । गोपाय्यात्, गुप्यात् । अगोपायीत् ॥ **नेटि ७।२।४** ॥ इडादौ सिचि हलन्तस्य वृद्धिर्न । अगोपीत्, अगौप्सीत् ॥ **झलो झलि ८।२।२६** ॥ झलः परस्य सस्य लोपो झलि । अगौप्ताम् । अगौप्सुः । अगौप्सीः । अगौप्तम् । अगौप्त । अगौप्सम् । अगौप्स्व । अगौप्स्म । अगोपायिष्यत्, अगोपिष्यत्, अगोप्स्यत् ॥ क्षि क्षये ॥ १२ ॥ क्षयति । चिक्षाय । चिक्षियतुः । चिक्षियुः । एकाच इति निषेधे प्राप्ते-।

---

१ **धातवस्त्र्यधिकमिति** । विन्दतेरपि ग्रहणादिति भावः । अत्रेदं बोध्यम्-'तुदादौ मतभेदेन स्थितौ यौ च चुरादिषु । तृप्-दृपी, तौ वारयितुं श्यना निर्देश आदृत' ॥ स्विदपचौ सिध्यबुध्यौ मन्यपुष्यश्लिषः श्यना । वसिः शपा, लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये ॥' इति ॥ २ "आर्धधातुकस्येड्वलादेः" इति वर्ततेऽत आह-**वलादेरिति** ॥ ३ "सिचि वृद्धिः परस्मैपदेषु" इति "वदव्रज-" इत्यतः 'हलन्तस्याच.' इति वर्ततेऽत आह-**सिचीत्यादि** ॥ ४ "संयोगान्तस्य-" इत्यतः 'लोप.' इति "रात्सस्य" इत्यत. 'सस्य' इति वर्ततेऽत आह-**सस्येत्यादि** ॥

**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ७।२।१३ ॥** क्रादिभ्य एव लिट इण्न स्यादन्यस्मादनिटोपि स्यात् ॥ **अचस्तास्वत्थल्यनिटो नित्यम् ७।२।६१ ॥** उपदेशेऽजन्तो यो धातुस्तासौ नित्यानिट् ततस्थल इण् न ॥ **उपदेशेऽत्वतः ७।२।६२ ॥** उपदेशेऽकारवतस्तासौ नित्यानिटः परस्य थल इण् न स्यात् ॥ **ऋतो भारद्वाजस्य ७।२।६३ ॥** तासौ नित्यानिट ऋदन्तादेव थलो नेट् भारद्वाजस्य मते । तेन अन्यस्य स्यादेव । अयमत्र सम्ग्रहः—अजन्तोऽकारवान्वा यस्तास्यनिट् थलि वेडयम् । ऋदन्त ईदृङ्नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥ चिक्षयिथ, चिक्षेथ । चिक्षियथुः । चिक्षिय । चिक्षाय, चिक्षय । चिक्षियिव । चिक्षियिम । क्षेता । क्षेष्यति ।

---

१ "नेड् वशि–" इत्यत 'न इट्' इति वर्तते । अष्टानामप्येषामनुदात्तत्वादेवेड्निषेधे सिद्धे पुनरिड्निषेधविधान नियमार्थमेवेति नियमफलमन्यव्यावृत्तिरेवेति तां दर्शयति–अन्यस्मादिति ॥ २ "न वृद्भ्य –" इत्यत 'न' इति, "गमेरिट्–" इत्यत 'इट्' इति वर्तते 'तास्वत्' सप्तम्यन्ताद् वति । "एकाच उपदेशे–" इति निषेधस्य "कृसृभृवृ–" इति नियमेन बाधात् इट् प्राप्तो निषेधविध्यर्थमिदमित्याह–थल इण् नेति ॥ ३ "अचस्तास्वत्–" इत्यत. 'तास्वत्थल्यनिटो नित्यम्' इति वर्ततेऽत आह–उपदेश इत्यादि ॥ ४ "अचस्तास्वत्–" इत्यत 'तास्वत्थल्यनिटो नित्यम्' इति वर्तते । ऋदन्तस्याजन्तत्वाव्यभिचारादेव सिद्धौ नियमार्थमिदमिति नियमफल त्वन्यव्यावृत्तिरित्याह–तेनान्यस्य स्यादेवेति ॥ ५ चतुर्णां सूत्राणामर्थस्य सम्ग्रह इत्यर्थः । सम्ग्रहश्लोकार्थस्तु "लिटि क्राद्यन्य सेड् भवेत् । तासि अनिड् य. अजन्त. अथवा अकारवान् अय थलि वेट् । ईदृक् तासि अनिट् ऋदन्त थलि नित्यानिट्" इति बोध्यः ॥

क्षयतु । अक्षयत् ॥ क्षयेत् । **अकृत्सार्वधातुकयोर्दीर्घः ७।४।२५ ॥** अजन्ताङ्गस्य दीर्घो यादौ प्रत्यये न तु कृत्सार्वधातुकयोः । क्षीयात् ॥ **सिचि वृद्धिः परस्मैपदेषु ७।२।१ ॥** इगन्ताङ्गस्य वृद्धिः स्यात् परस्मैपदे सिचि । अक्षैषीत् । अक्षेष्यत् ॥ तप संतापे ॥ १४॥ तपति । तताप । तेपतुः । तेपुः । तेपिथ, ततप्थ । तेपिव । तेपिम । तप्ता । तप्स्यति । तपतु । अतपत् । तपेत् । तप्यात् । अताप्सीत् । अताप्ताम् । अतप्स्यत् ॥ क्रमु पादविक्षेपे ॥ १५ ॥ **वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः ३।१।७० ॥** एभ्यः श्यन्वा कर्त्रर्थे सार्वधातुके परे । पक्षे शप् ॥ **क्रमः परस्मैपदेषु ७।३।७८ ॥** क्रमो दीर्घः परस्मैपदे शिति । क्राम्यति, क्रामति । चक्राम । क्रमिता । क्रमिष्यति । क्राम्यतु, क्रामतु । अक्राम्यत्, अक्रामत् । क्राम्येत्, क्रामेत् । क्रम्यात् । अक्रमीत् । अक्रमिष्यत् ॥

---

१ "अङ्गस्य" इत्यधिक्रियते । तेन 'प्रत्यये' इति लभ्यते दीर्घपदश्रुत्या 'अचः' इति च । "अयङ् यि" इत्यतः 'यि' इति वर्तते । तथा च विशेषणत्वात् तदन्ततदादिविधी इत्याह—अजन्ताङ्गस्येति ॥ २ "अङ्गस्य" इत्यधिक्रियते । वृद्धिपदेन च 'इकः' इति षष्ठ्यन्त पदमुपतिष्ठते । विशेषणे तदन्तविधिरित्याह—इगन्ताङ्गस्येति ॥ ३ "सार्वधातुके यक्" इत्यतः 'सार्वधातुके' इति "कर्तरि शप्" इत्यतः 'कर्तरि' इति, "दिवादिभ्यः—" इत्यतः 'श्यन्' इति वर्ततेऽत आह—श्यन्वेति ॥ ४ "शमामष्टानाम्—" इत्यतः 'दीर्घः' इति, "ष्ठिवुक्लमुचमाम्—" इत्यतः 'शिति' इति वर्ततेऽत आह—दीर्घ इत्यादि ॥

पा पाने ॥ १६ ॥ **पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः ७।३।७८ ॥** पादीना पिबादयः स्युरित्संज्ञकशकारादौ प्रत्यये परे । पिबादेशोऽदन्तस्तेन न गुणः । पिबति ॥ **आत औ णलः ७।१।३४ ॥** आदन्ताद्धातोर्णल औकारादेशः स्यात् । पपौ ॥ **आतो लोप इटि च ६।४।६४ ॥** अजाद्योरार्धधातुकयोः क्ङिदिटोः परयोरातो लोपः । पपतुः । पपुः । पपिथ, पपाथ । पपथुः । पप । पपौ । पपिव । पपिम । पाता । पास्यति । पिबतु । अपिबत् । पिबेत् ॥ **एर्लिङि ६।४।६७ ॥** घुसंज्ञकानां मास्थादीना च एत्वं स्यादार्धधातुके किति लिङि । पेयात् । गातिस्थेति सिचो लुक् । अपात् ॥ अपाताम् ॥ **आतः ३।४।११० ॥** सिज्लुकि आदन्तादेव झेर्जुस् ॥ **उस्यपदान्तात् ६।१।९६ ॥** अपदान्तादकारादुसि पर- 6।1।95

---

१ "ष्ठिवुक्लमु–" इति सूत्रात् 'शिति' इति वर्तते तत्र च कर्मधारय एव तच्च अङ्गाक्षिप्तप्रत्ययस्य विशेषणत्वेन तदादिपरमित्याह–इत्संज्ञकशकारादाविति॥ २ "आर्धधातुके" इत्यधिक्रियते "दीङो युट्–" इत्यत. 'अचि क्ङिति' इति वर्तते विशेषणे तदादिविधिफलितमाह–अजाद्योरिति । अजादौ क्ङिति आर्धधातुके, आर्धधातुके इटि चेत्यर्थ. ॥ ३ "आर्धधातुके" इत्यधिक्रियते । "घुमास्थागापाजहातिसाम्–" इति वर्ततेऽत आह–घुसंज्ञकानामित्यादि ॥ ४ "झेर्जुस्" इति वर्तते । "सिजभ्यस्त–" इत्यनेनैव सिज्लुकि प्रत्ययलक्षणेन झेर्जुसि सिद्धे आत इति सूत्र व्यर्थं सत् नियमार्थमित्याह–'सिज्लुकी त्यादि ॥ ५ "आद् गुणः" इत्यत 'आम्' इति वर्तते "एङि पररूपम्" इत्यत. 'पररूपम्' इति "एक. पूर्वपरयो." इति चात आह–अकारादिति॥

रूपमेकादेशः । अपुः । अपास्यत् ॥ ग्लै हर्षक्षये ॥१७॥ ग्लायति ॥ **आदेच उपदेशेऽशिति ६।१।४५ ॥** उपदेशे एजन्तस्य धातोरात्त्वं न तु शिति । जग्लौ । ग्लाता । ग्लास्यति । ग्लायतु । अग्लायत् । ग्लायेत् ॥ **वाऽन्यस्य संयोगादेः ६।४।६८॥** घुमास्थादेरन्यस्य संयोगादेर्धातोरात एत्वं वार्धधातुके किति लिङि । ग्लेयात्, ग्लायात् ॥ **यमरमनमातां सक् च ७।२।७३ ॥** एषां सक् स्यादेभ्यः सिच इट् स्यात्परस्मैपदेषु । अग्लासीत् । अग्लास्यत् ॥ ह्वृ कौटिल्ये ॥ १८ ॥ ह्वरति ॥ **ऋतश्च संयोगादेर्गुणः ७।४।१० ॥** ऋदन्तस्य सयोगादेरङ्गस्य गुणो लिटि । उपधाया वृद्धिः । जह्वार । जह्वरतुः । जह्वरुः । जह्वर्थ । जह्वरथुः । जह्वर । जह्वार, जह्वर । जह्वरिव । जह्वरिम । ह्वर्ता ॥ **ऋद्धनोः स्ये ७।२।७० ॥** ऋतो हन्तेश्च स्यस्येट् । ह्वरिष्यति । ह्वरतु । अह्वरत् । ह्वरेत् ॥ **गुणो-**

---

१ **शितीति** । इत्सञ्ज्ञकशकारादावित्यर्थः । तेन मेङ्. प्रणिममे त्रैङ्. तत्रे इत्यादौ नैवात्त्वस्याप्रवृत्तिरिति भावः ॥ २ "घुमास्थागापाजहातिसां हलि" इत्यतः 'घुमास्थागापाजहातिसाम्' इति "एर्लिङि" इति च वर्तते । अन्यत्वं च गृह्यमाणघुमास्थादेरेवोपस्थितत्वात् इत्याह-**घुमास्थादेरिति** ॥ ३ "इडत्यर्ति-" इत्यत. 'इट्' इति "अञ्जे सिचि" इत्यतः 'सिचि' इति "स्तुसुधूञ्भ्य." इत्यतः 'परस्मैपदेषु' इति वर्तते ऽत आह-**एषामिति** ॥ ४ "अङ्गस्य" इत्यधिक्रियते "दयतेर्दिगि-" इत्यत 'लिटि' इति वर्तते विशेषणे तदन्तविधिरित्यत आह-**ऋदन्तस्येत्यादि** ॥ ५ "इडत्त्यर्तिव्ययतीनाम्" इत्यतः 'इट्' इति वर्तते ऽत आह-**स्यस्येडिति** ॥

**र्तिसंयोगाद्योः ७ । ४ । २९ ॥** अर्तेः संयोगादेर्ऋदन्तस्य च गुणः स्याद्यकि यादावार्धधातुके लिङि च । ह्वर्यात् । अह्वार्षीत् । अह्वरिष्यत् ॥ श्रु श्रवणे ॥ १९ ॥ **श्रुवः शृ च ३ । १ । ७४ ॥** श्रुवः शृ इत्यादेशः स्यात् श्नुप्रत्ययश्च । शृणोति ॥ **सार्वधातुकमपित् १ । २ । ४ ॥** अपित्सार्वधातुकं ङिद्वत् । शृणुतः ॥ **हुश्नुवोः सार्वधातुके ६।४।८७॥** हुश्नुवोरनेकाचोऽसंयोगपूर्वस्योवर्णस्य यण् स्यादचि सार्वधातुके । शृण्वन्ति । शृणोषि । शृणुथः । शृणुथ । शृणोमि ॥ **लोपश्चास्यान्यतरस्यां म्वोः ६।४।१०७॥** असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा म्वोः परयोः। शृण्वः, शृणुवः । शृण्मः, शृणुमः । शुश्राव । शुश्रुवतुः । शुश्रुवुः । शुश्रोथ । शुश्रुवथुः । शुश्रुव । शुश्राव, शुश्रव । शुश्रुव । शुश्रुम । श्रोता । श्रोष्यति । शृणोतु, शृणुतात् । शृणुताम् । शृण्वन्तु ॥ **उतश्च प्रत्ययादसंयोगपूर्वात् ६।४।१०६॥** असंयोगपूर्वात्प्र-

१ "रीङ् ऋतः" इत्यत 'ऋतः' इति "रिङ् शयग्लिङ्क्षु" इत्यतः 'शयग्लिङ्क्षु' इति वर्ततेऽत आह—यकीत्यादि ॥ शप्रत्ययस्य त्वसम्भवान्नानुवृत्तिरिति भावः ॥ २ "स्वादिभ्यः—" इत्यतः 'श्नु' इति वर्ततेऽत आह—श्नुप्रत्ययश्चेति ॥ ३ "गाङ्कुटादिभ्योऽञ्णिन्ङित्"इत्यतः 'ङित्' इति वर्ततेऽत आह—ङिद्वदिति ॥ ४ "अचि श्नुधातु०—" इत्यतः 'अचि' इति "इणो यण्" इत्यतः 'यण्' इति "एरनेकाचः" इत्यतः 'अनेकाचोऽसंयोगपूर्वस्य' इति वर्ततेऽत आह—अनेकाचोऽसंयोगेति ॥ ५ "उतश्च प्रत्ययादसंयोगपूर्वाद्" इति 'अस्य' इत्यनेन गृह्यतेऽत आह—असंयोगपूर्वस्येति ॥

स्यथोतो हेर्लुक्[1] । शृणु, शृणुतात् । शृणुतम् । शृणुत । गुणावादेशौ । शृणवानि । शृणवाव । शृणवाम । अशृणोत् । अशृणुताम् । अशृण्वन् । अशृणोः । अशृणुतम् । अशृणुत । अशृणवम् । अशृण्व, अशृणुव । अशृण्म, अशृणुम । शृणुयात् । शृणुयाताम् । शृणुयुः । शृणुयाः । शृणुयातम् । शृणुयात । शृणुयाम् । शृणुयाव । शृणुयाम । श्रूयात् । अश्रौषीत् । अश्रोष्यत् ॥ गम्लृ गतौ ॥ २० ॥ **इषुगमियमां छः ७।३।७७॥** एषां छः स्यात् शिति[2] । गच्छति । जगाम ॥ **गमहनजनखनघसां लोपः क्ङित्यनङि ६।४।९८॥** एषामुपधाया लोपोऽजादौ[3] क्ङिति न त्वङि । जग्मतुः । जग्मुः । जगमिथ, जगन्थ । जग्मथुः । जग्म । जगाम, जगम । जग्मिव । जग्मिम । गन्ता । **गमेरिट् परस्मैपदेषु ७।२।५८॥** गमेः परस्य सादेरार्धधातुकस्येट्[4] स्यात् परस्मैपदेषु । गमिष्यति । गच्छतु । अगच्छत् । गच्छेत् । गम्यात् ॥ **पुषादिद्यु-**

---

१ "अतो हेः" "चिणो लुक्" इत्याभ्यां 'हेः, लुक्' इति वर्ततेऽत आह-हेर्लुगिति ॥ २ "ष्ठिवुक्लमुचमाम्-" इत्यत 'शिति' इति वर्ततेऽत आह-शितीति ॥ ३ "अचि श्नुधातु-" इत्यत 'अचि' इति वर्ततेऽत आह-अजादाविति ॥ ४ "सेऽसिचि कृत-" इत्यतः 'से' इति "आर्धधातुकस्येड्-" इत्यतः 'आर्धधातुकस्य' इति वर्ततेऽत आह-सादेरार्धधातुकस्येत्यादि ॥

ताॢदितः परस्मैपदेषु ३।१।५५॥ श्यन्विकरणपुषादेर्द्युतादेर्लृदितश्च परस्य च्लेरङ् परस्मैपदेषु । अगमत् । अगमिष्यत् ॥

इति परस्मैपदिनः ॥

---

एध वृद्धौ ॥ १ ॥ टित आत्मनेपदानां टेरे ३।४।७९॥ टितो लस्यात्मनेपदानां टेरेत्वम् । एध ॥ आतो ङितः ७।२।८१॥ अतः परस्य ङितामाकारस्य इय् स्यात् । एधेते । एधन्ते ॥ थासः से ३।४।८०॥ टितो लस्य थासः से स्यात् । एधसे । एधेथे । एधध्वे । अतो गुणे । एधे । एधावहे । एधामहे ॥ इजादेश्च गुरुमतोऽनृच्छः ३।१।३६॥ इजादिर्यो धातुर्गुरुमानृच्छत्यन्यस्तत आम् स्याल्लिटि ॥ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १।३।६३॥ आम्प्रत्ययो यस्मादित्यतद्गुणसंविज्ञानो बहुव्रीहिः । [6] आम्प्रकृत्या तुल्यमनुप्रयुज्यमानात् कृञोऽप्यात्मनेपदम् ॥

---

१ "च्लेः सिच्" इत्यत 'च्लेः' इति "अस्यतिवक्ति-" इत्यत. 'अङ्' इति वर्ततेऽत आह—च्लेरिति ॥ २ "लस्य" इत्यधिक्रियते ॥ ३ "अतो येयः" इत्यतः 'अत' 'इय' इति वर्ततेऽत आह—अतः परस्येति ॥ ४ "टित आत्मनेपदानाम्-" इति वर्ततेऽत आह—टितो लस्येति ॥ ५ "कास्प्रत्ययाद्-" इत्यत 'आममन्त्रे लिटि' इति वर्ततेऽत आह—लिटीति ॥ ६ "अनुदात्तङित-" इत्यत. 'आत्मनेपदम्' इति वर्तते । बहुव्रीहिफलमाह—आम्प्रकृत्येति ॥ अयं भाव.— आम्प्रकृतेरात्मनेपदित्वे आमन्तादात्मनेपदम्, उभयपदित्वे उभयपदित्वम् । परस्मैपदित्वे परस्मैपदमेवेति रीत्या आम्प्रकृत्या तुल्यमेव न तु तद्विपरीतमिति ॥

**लिटस्तझयोरेशिरेच् ३ । ४ । ८१ ॥** लिडादेशयोस्तझयोरेश् इरेजेतौ स्तः । एधाञ्चक्रे । एधाञ्चक्राते । एधाञ्चक्रिरे । एधाञ्चकृषे । एधाञ्चक्राथे ॥ **इणः षीध्वंलुङ्लिटां धोऽङ्गात् ८।३।७८॥** इणन्तादङ्गात्परेषां षीध्वंलुङ्लिटां धस्य ढः स्यात् । एधाञ्चकृढ्वे । एधाञ्चक्रे । एधाञ्चकृवहे । एधाञ्चकृमहे । एधाम्बभूव । एधामास । एधिता । एधितारौ । एधितारः । एधितासे । एधितासाथे ॥ **धि च ८ । २ । २५ ॥** धादौ प्रत्यये परे सस्य लोपः । एधिताध्वे । **ह एति ७।४।५२ ॥** तासस्त्योः सस्य हः स्यादेति परे । एधिताहे । एधितास्वहे । एधितास्महे । एधिष्यते । एधिष्येते । एधिष्यन्ते । एधिष्यसे । एधिष्येथे । एधिष्यध्वे । एधिष्ये । एधिष्यावहे । एधिष्यामहे ॥ **आमेतः ३।४।९० ॥** लोट एकारस्याम् स्यात् । एधताम् । एधेताम् । एधन्ताम् ॥ **सवाभ्यां वामौ ३।४।९१ ॥** सवाभ्यां परस्य लोटेपदेषु स्यामादामौ स्तः । एधस्व । एधेथाम् । एधध्वम् ॥ **एत ऐ ३।४।९३ ॥** लोडुत्तमस्य एत ऐ स्यात् । एधै । एधावहै । एधामहै ॥ आटश्च । **आदेशु**

---

१ "अपदान्तस्य मूर्धन्यः" इत्यधिक्रियतेऽत आह—ढ इति॥ २ "सयोगान्तस्य लोपः" "रात्सस्य" इत्यतः 'सस्य लोपः' इति वर्ततेऽत आह—सस्य लोप इति॥ ३ "सः स्यार्धे—" इत्यतः 'स' इति, "तासस्त्योः—" इति च वर्ततेऽत आह—तासस्त्योरिति ॥ ४ "लोटो लङ्वत्" इत्यत 'लोटः' इति वर्ततेऽत आह—लोट इति ॥ ५ "लोटो लङ्वत्" इत्यत 'लोट' इति "अमेत" इत्यतः 'एतः' इति वर्ततेऽत आह—लोडेत इति ॥ ६ "लोटो लङ्वत्" "आडुत्तमस्य-" इत्यत. 'लोट.' 'उत्तमस्य' इति वर्ततेऽतआह—लोडुत्तमस्येति॥

ऐधेताम् । ऐधन्त । ऐधथाः । ऐधेथाम् । ऐधध्वम् । ऐधे । ऐधावहि । ऐधामहि ॥ **लिङः सीयुट् ३।४।१०२ ॥** सलोपः । एधेत । एधेयाताम् ॥ **झस्य रन् ३।४।१०५ ॥** लिङो झस्य रन् स्यात् । एधेरन् । एधेथाः । एधेयाथाम् । एधेध्वम् ॥ **इटोऽत् ३।४।१०६ ॥** लिङादेशस्य इटोऽत्स्यात् । एधेय । एधेवहि । एधेमहि ॥ **सुट् तिथोः ३।४।१०७ ॥** लिङस्तथोः सुट् । यलोपः । आर्धधातुकत्वात्सलोपो न । एधिषीष्ट । एधिषीयास्ताम् । एधिषीरन् । एधिषीष्ठाः । एधिषीयास्थाम् । एधिषीध्वम् । एधिषीय । एधिषीवहि । एधिषीमहि ॥ ऐधिष्ट । ऐधिषाताम् ॥ **आत्मनेपदेष्वनतः ७।१।५ ॥** अनकारात्परस्यात्मनेपदेषु झस्य अदित्यादेशः स्यात् । ऐधिषत । ऐधिष्ठाः । ऐधिषाथाम् । ऐधिढ्वम् । ऐधिषि । ऐधिष्वहि । ऐधिष्महि । ऐधिष्यत । ऐधिष्येताम् । ऐधिष्यन्त । ऐधिष्यथाः । ऐधिष्येथाम् । ऐधिष्यध्वम् । ऐधिष्ये । ऐधिष्यावहि । ऐधिष्यामहि ॥ कमु कान्तौ ॥२॥ **कमेर्णिङ् ३।१।३० ॥** स्वार्थे । ङित्त्वात्तङ् । कामयते ॥ **अयामन्ताल्वाय्येत्न्विष्णुषु ६।४।५५ ॥** आम् अन्त आलु आय्य इत्नु इष्णु

---

१ “लिङः सलोपोऽनन्त्यस्य” इत्यनेन सीयुट इति शेष. ॥ २ “लिङः सीयुट्” इत्यतो ‘लिङः’ इति वर्तते ॥ ३ “लिङः सीयुट्” इत्यतो ‘लिङः’ इति वर्तते ॥ ४ “लिङः सीयुट्” इत्यतो ‘लिङः’ इति वर्तते ॥ ५ “झोऽन्त.” “अदभ्यस्तात्” इत्याभ्यां ‘झ., अत्’ इत्यनुवर्तते ॥

एत्तु णेरयादेशः स्यात् । कामयाञ्चक्रे । आयादय इति णिङ् वा। चकमे । चकमाते । चकमिरे । चकमिषे । चकमाथे । चकमिध्वे । चकमे । चकमिवहे । चकमिमहे । कामयिता । कामयितासे । कमिता । कामयिष्यते, कमिष्यते । कामयताम् । अकामयत । कामयेत । कामयिषीष्ट ॥ **विभाषेटः ८।३।७९॥** इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा ढः । कामयिषीढ्वम् । कामयिषीध्वम् । कमिषीष्ट । कमिषीध्वम् ॥ **णिश्रिद्रुस्रुभ्यः कर्तरि चङ् ३।१।४८॥** ण्यन्तात् श्र्यादिभ्यश्च च्लेश्चङ् स्यात् कर्त्रर्थे लुङि परे । अकामि अत इति स्थिते-। **णेरनिटि ६।४।५१॥** अनिडादावार्धधातुके परे णेर्लोपः स्यात् ॥ **णौ चङ्युपधाया ह्रस्वः ७।४।१॥** चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यात् ॥ **चङि । ६।१।११॥** चङि परे अनभ्यासस्य धात्ववयवस्यैकाचः प्रथमस्य द्वे स्तोऽजादेर्द्वितीयस्य ॥ **सन्वल्लघुनि चङ्परेऽनग्लोपे ।**

---

१ "णेरनिटि" इत्यतः 'णेः' इति वर्ततेऽत आह-**णेरयादेश इति** ॥
२ " इणः षीध्वंलुङ्लिटां धोऽङ्गात्" इति वर्ततेऽत आह-**इण इति** ॥
३ "च्लेः सिच्" इत्यतः 'च्लेः' इति वर्ततेऽत आह-**च्लेरिति** ॥
४ "आर्धधातुके" इत्यधिकृतम् । "अतो लोपः" इत्यतो 'लोपः' इति वर्ततेऽत आह-**आर्धधातुके इत्यादि** ॥ ५ "अङ्गस्य" इत्यधिकृतम् । णिपरकचङोऽसंभवादाह-**चङ्पर इत्यादि** ॥ ६ "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" "लिटि धातोः" इत्यतः 'अनभ्यासस्य' इति वर्ततेऽत आह-**अनभ्यासस्येति** ॥

७।४।९३॥ चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः तस्य सनीव कार्यं स्याण्णावग्लोपेऽसति ॥ **सन्यतः ७ । ४ । ७९ ॥** अभ्यासस्यात इत् स्यात् सनि ॥ **दीर्घो लघोः ७।४।९४॥** लघोरभ्यासस्य दीर्घः स्यात् सन्वद्भावविषये । अचीकमत । णिङभाव-पक्षे—( कमेश्च्लेश्चङ् वाच्यः ) । अचकमत । अकामयिष्यत, अक-मिष्यत ॥ अय गतौ ॥ ३ ॥ अयते ॥ **उपसर्गस्यायतौ । ८ । २ १९ ॥** अयतिपरस्योपसर्गस्य यो रेफस्तस्य लत्वं स्यात् । प्लायते । पला-यते ॥ **दयायासश्च ३।१।३७ ॥** दय् अय् आस् एभ्य आम्

---

१ "अङ्गस्य" इत्यधिकृतम् । 'चङ्परे' इति बहुव्रीहिणा लब्ध 'णौ' इत्यावर्तने एकम् अङ्गपदेनान्वेति द्वितीयम् 'अनग्लोपे' इत्यनेन । "अत्र लोप –" इत्यतः 'अभ्यासस्य' इति वर्ततेऽत आह—चङ्परे णाविति ॥ २ "अत्र लोप.–" इत्यतः 'अभ्यासस्य' इति "भृञामित्" इत्यत 'इत्' इति वर्ततेऽत आह—अभ्यास-स्येति ॥ ३ " अत्र लोपोभ्यासस्य" "सन्वल्लघुनि" इत्याभ्याम् 'अभ्यासस्य' 'सन्वत्' इति वर्ततेऽत आह—अभ्यासस्येति ॥ ४ " कृपो रो लः " इत्यतः ' रो लः ' इति वर्तते । ' निर्दुरो. ' इति विशेषग्रहणेनैव सिद्धे ' उपसर्गस्य ' इति सामान्यग्रहणसामर्थ्याद् ' येन नाव्यवधान तेन व्यवहितेऽपि ' इति एकव-र्णव्यवधाने ' प्रअयते पराअयते परिअयते ' इत्यत्रैव लत्वम् न तु 'प्रतिअयते' इत्यत्रानेकवर्णव्यवहितस्य रेफस्य इति ' अयतिपरस्योपसर्गरेफस्य ' इत्यर्थाङ्गीकारे सकलेष्टसिद्धिं मनसि निधायापि गुरुभक्तिप्रदर्शनाय ' प्रतिअयते ' इत्यस्यानभि-धानकल्पनया गुरुभूतमपि व्याख्यान गुरूक्तमेवाह—अयतिपरस्योपसर्गस्येति ॥ ५ " कास्प्रत्ययादाम् " इत्यतः ' आममन्त्रे लिटि ' इत्यनुवर्ततेऽत आह—आम् स्यादिति ॥

स्याल्लिटि । अयाञ्चक्रे । अयिता । अयिष्यते । अयताम् । आयत । अयेत । अयिषीष्ट । विभाषेटः । अयिषीढ्वम्, अयिषीध्वम् । आयिष्ट । आयिढ्वम्, आयिध्वम । आयिष्यत ॥ द्युत दीप्तौ ॥ ४ ॥ द्योतते । **द्युद्भ्यो लुङि ४ । ३ । ९१ ॥** द्युतादिभ्यो लुङः परस्मैपदं वा स्यात् । पुषादीत्यङ् । अद्युतत्, अद्योतिष्ट । अद्योतिष्यत ॥ एवम् ॥ श्विता वर्णे ॥ ५ ॥ ञिमिदा स्नेहने ॥ ६ ॥ ञिष्विदा स्नेहनमोचनयोः ॥ ७ ॥ मोहनयोरित्येके । ञिक्ष्विदा चेत्येके ॥ रुच दीप्तावभिप्रीतौ च ॥ ८ ॥ घुट परिवर्तने ॥ ९ ॥ शुभ दीप्तौ ॥ १० ॥ क्षुभ संचलने ॥ ११ ॥ णभ तुभ हिंसायाम् ॥ १२ ॥ १३ ॥ स्रंसु भ्रंसु ध्वंसु अवस्रंसने ॥ १४ ॥ १५ ॥ १६ ॥ ध्वंसु गतौ च ॥ स्रम्भु विश्वासे ॥ १७ ॥ वृतु वर्तने ॥ १८ ॥ वर्तते । ववृते । वर्तिता ॥ **वृद्भ्यः स्यसनोः १।३।९२ ॥** वृतादिभ्यः पञ्चभ्यो वा परस्मैपदं स्यात्स्ये सनि च ॥ **न वृद्भ्यश्चतुर्भ्यः ७।२।५९ ॥** वृतुवृधुशृधुस्यन्दूभ्यः सकारादेरार्धधातुकस्येण् न स्यात् तङानयोरभावे । वर्त्स्यति, वर्तिष्यते । वर्तताम् । अवर्तत । वर्तेत । वर्तिषीष्ट । अवर्तिष्ट । अवर्त्स्यत्, अवर्तिष्यत ॥ दद दाने ॥ १९ ॥ ददते ॥ **न शसददवादिगुणानाम् ६ । ४**

---

१ " शेषात् कर्तरि " इत्यतः ' परस्मैपदम् ' इत्यनुवर्ततेऽत आह–परस्मैपदमिति ॥ २ " शेषात् कर्तरि " " वा क्यषः " इत्यतोऽनुवर्त्याह–वा परस्मैपदमिति ॥ ३ " सेऽसिचिकृत–" गमेरिट्–" इत्याभ्यामनुवर्त्याह–सकारादेरिति ॥

१२६ ॥ शसेर्ददेर्वकारादीनां गुणशब्देन विहितो योऽकारस्तस्य एत्वाभ्यासलोपौ न । ददद । दददाते । दददिरे । ददिता । ददिष्यते । ददताम् । अददत । ददेत । ददिषीष्ट । अददिष्ट । अददिष्यत ॥ त्रपूष् लज्जायाम् ॥ २० ॥ त्रपते ॥ **तॄफलभजत्रपश्च ६।४।१२२ ॥** एषामत एत्वमभ्यासलोपश्च स्यात् किति लिटि सेटि थलि च । त्रेपे । त्रपिता, त्रप्ता । त्रपिष्यते, त्रप्स्यते । त्रपताम् । अत्रपत । त्रपेत । त्रपिषीष्ट, त्रप्सीष्ट । अत्रपिष्ट, अत्रप्त । अत्रपिष्यत, अत्रप्स्यत ॥

॥ इत्यात्मनेपदिनः ॥

श्रिञ् सेवायाम् ॥ १॥ श्रयति, श्रयते । शिश्राय, शिश्रिये । श्रयितासि, श्रयितासे । श्रयिष्यति, श्रयिष्यते । श्रयतु, श्रयताम् । अश्रयत्, अश्रयत । श्रयेत्, श्रयेत । श्रीयात्, श्रयिषीष्ट । चङ् । अशिश्रियत्, अशिश्रियत । अश्रयिष्यत्, अश्रयिष्यत ॥ भृञ् भरणे ॥२॥ भरति, भरते । बभार । बभ्रतुः । बभ्रुः । बभर्थ । बभृव । बभृम । बभ्रे । बभृषे । भर्तासि, भर्तासे । भरिष्यति, भरिष्यते । भरतु, भरताम् । अभरत्, अभरत । भरेत्, भरेत ॥ **रिङ् शयग्लिङ्क्षु ७।४।२८ ॥** शे यकि यादावार्धधातुके लिङि च ऋतो[3] रिङ् आदे-

१ "अत एकहल्मध्येऽनादेशादेर्लिटि" इत्यनुवर्त्याह—एत्वाभ्यासेति ॥ २ "अत एकहल्मध्ये" "घ्वसोरेद्धौ" इत्यतः 'अतः, एत्, ' 'अभ्यासलोपः' इति अनुवर्तते । तरतेर्गुणत्वेन फलभजोरादेशादित्वेन त्रपेरनेकहल्मध्यस्थत्वेनाप्राप्तावेत्वाभ्यासलोपौ विधीयेते इत्याह—एषामत इति ॥ ३ "अकृत्सार्वधातुकयोर्दीर्घः" "यि क्ङिति" "रीङ् ऋतः" इत्याभ्यामनुवर्त्याह—ऋत इत्यादि ॥

शः स्यात् । रीङि प्रकृते रिङ्विधानसामर्थ्याद्दीर्घो[1] न । भ्रियात् ॥ **उश्च १।२।१२ ॥** ऋवर्णात्परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । भृषीष्ट । भृषीयास्ताम् । अभार्षीत् ॥ **ह्रस्वादङ्गात् ८।२।२७ ॥** सिचो[3] लोपो झलि । अभृत । अभृषाताम् । अभरिष्यत्, अभरिष्यत ॥ हृञ् हरणे ॥ ३ ॥ हरति, हरते । जहार । जहर्थ । जह्रिव । जह्रिम । जह्रे । जहृषे । हर्तासि, हर्तासे । हरिष्यति, हरिष्यते । हरतु, हरताम् । अहरत्, अहरत । हरेत्, हरेत । ह्रियात् । हृषीष्ट । हृषीयास्ताम् । अहार्षीत्, अहृत । अहरिष्यत्, अहरिष्यत ॥ धृञ् धारणे ॥ ४ ॥ धरति, धरते ॥ णीञ् प्रापणे ॥ ५ ॥ नयति, नयते ॥ डुपचष् पाके ॥ ६ ॥ पचति, पचते । पपाच । पेचिथ, पपक्थ । पेचे । पक्तासि, पक्तासे ॥ भज सेवायाम् ॥ ७ ॥ भजति, भजते । बभाज, भेजे । भक्तासि, भक्तासे । भक्ष्यति, भक्ष्यते । अभाक्षीत् । अभक्त । अभक्षाताम् ॥ यज देवपूजासङ्गतिकरणदानेषु ॥ ८ ॥ यजति, यजते ॥ **लिट्यभ्यासस्योभयेषाम् ६ । १ । २७ ॥** वच्यादीनां ग्रहा-

---

१ दीर्घ इति । " अकृत्सार्वधातुकयोः " इति प्राप्त इत्यादिः ॥ २ " असंयोगाल्लिट् " " इको झल् " " लिङ्सिचावात्मनेपदेषु " इत्येभ्योऽनुवृत्त्याह-झलादी इति ॥ ३ " संयोगान्तस्य लोपः " " रात्सस्य " " झलो झलि " इत्येभ्योऽनुवृत्त्याह-सिचो लोपो झलीति ॥ अङ्गात्परो झलि परे सकारः सिच् एव संभवति, सिप् तु दृष्टानुविधिकच्छन्दोविषय इति भावः ॥

दीनां चाभ्यासस्य संप्रसारणं लिटि। इयाज ॥ **वचिस्वपियजादीनां किति ६।१।१५** ॥ वचिस्वप्योर्यजादीनां च संप्रसारणं स्यात् किति। ईजतुः। ईजुः। इयजिथ, इयष्ठ। ईजे। यष्टा। षढोः कः सि। यक्ष्यति, यक्ष्यते। इज्यात्, यक्षीष्ट। अयाक्षीत्, अयष्ट ॥ वह प्रापणे ॥ ९ ॥ वहति, वहते। उवाह। ऊहतुः। ऊहुः। उवहिथ ॥ **झषस्तथोर्धोऽधः ।८।२।४०॥** झषः परयोस्तथोर्धः स्यान्न तु दधातेः ॥ **ढो ढे लोपः।८।३।१३॥** **सहिवहोरोदवर्णस्य ६।३।११२॥** अनयोरवर्णस्य ओत्स्यात् ढलोपे। उवोढ। ऊहे। वोढा। वक्ष्यति। अवाक्षीत्। अवोढाम्। अवाक्षुः। अवाक्षीः। अवोढम्। अवोढ। अवाक्षम्। अवाक्ष्व। अवाक्ष्म। अवोढ। अवक्षाताम्। अवक्षत। अवोढाः। अवक्षाथाम्। अवोढ्वम्। अवक्षि। अवक्ष्वहि। अवक्ष्महि ॥

इति भ्वादयः ॥ १ ॥

---

## अथादादयः।

— अद भक्षणे ॥ १ ॥ **अदिप्रभृतिभ्यः शपः २।४।७२॥**

---

१ " ष्यङः संप्रसारणम् " इत्यतः ' संप्रसारणम् ' इत्यनुवर्त्याह–संप्रसारणमिति ॥ २ " ष्यङः संप्रसारणम् " इत्यत ' संप्रसारणम् ' इत्यनुवर्त्याह–संप्रसारणमिति ॥ ३ " ढ्रलोपे–" इत्यत, ' ढ्रलोपे ' इति वर्तते। तत्र योग्यतयाह–ढलोप इति ॥

लुक्[1] स्यात् । अत्ति । अत्तः । अदन्ति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्मः ॥ **लिट्यन्यतरस्याम् २ । ४ । ४०॥** अदो[2] घस्लृ वा स्याल्लिटि । जघास । उपधालोपः ॥ **शासिवसिघसीनां च ८।३।६०॥** इण्[3]कुभ्यां परस्यैषां सस्य षः स्यात् । घस्य चर्त्वम् । जक्षतुः । जक्षुः । जघसिथ । जक्षथुः । जक्ष । जघास, जघस । जक्षिव । जक्षिम । आद । आदतुः आदुः । **इडत्त्यर्तिव्ययतीनाम् ७।२।६६॥** अद् ऋ व्येञ एभ्यस्थलो[4] नित्यमिट् स्यात् । आदिथ । अत्ता । अत्स्यति । अत्तु । अत्तात् । अत्ताम् । अदन्तु ॥ **हुझल्भ्यो हेर्धिः ६।४।१०१॥** होर्झलन्तेभ्यश्च हेर्धिः स्यात् । अद्धि । अत्तात् । अत्तम् । अत्त । अदानि । अदाव । अदाम ॥ **अदः सर्वेषाम ७।३।१००॥** अदः परस्यापृ[5]क्तसार्वधातुकस्य अट् स्यात्सर्वमतेन । आदत् । आत्ताम् । आदन् । आदः । आत्तम् । आत्त । आदम् । आद्व । आद्म ।

---

१ "ण्यक्षत्रियार्षञितः–" इति सूत्रादनुवर्त्याह–लुगिति ॥ २ "अदो जग्धिर्ल्यप्ति किति" "लुङ्सनोर्घस्लृ" इत्याभ्यामनुवर्त्याह–अद इति ॥ ३ "अपदान्तस्य मूर्धन्यः" "सहेः साडः सः" "इण्कोः" इत्यधिकृत्याह–इणिति ॥ ४ "अचस्तास्वत्–" इत्यतः 'थलि' इति वर्ततेऽत आह–थल इति ॥ ५ "अस्तिसिचः–" इत्यत 'अपृक्ते' इति "तुरुस्तुशम्यमः–" इत्यत 'सार्वधातुके' इति "अड् गार्ग्यगालवयोः" इत्यतः 'अट्' इति वर्ततेऽत आह–अपृक्तसार्वेति ॥

आशीर्लिङ्

अद्यात् । अद्याताम् अद्युः । अद्यात् । अद्यास्ताम् । अद्यासुः ॥ **लुङ्सनोर्घस्लृ २।४।३७॥** अदो घस्लृ स्याल्लुङि सनि च । लृदित्त्वादङ् । अघसत् । आत्स्यत् ॥ हन हिंसागत्योः ॥ २ ॥ हन्ति ॥ **अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति ६।४।३७॥** अनुनासिकान्तानामेषां वनतेश्च लोपः स्याज्झलादौ किति ङिति परे । यमिरमिनमिगमिहनिमन्यतयोऽनुदात्तोपदेशाः । तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु तनोत्यादयः । हतः । घ्नन्ति । हंसि । हथः । हथ । हन्मि । हन्वः । हन्मः । जघान । जघ्नतुः । जघ्नुः ॥ **अभ्यासाच्च ७।३।५५॥** अभ्यासात्परस्य हन्तेर्हस्य कुत्वं स्यात् । जघनिथ, जघन्थ । जघ्नथुः । जघ्न । जघान, जघन । जघ्निव । जघ्निम । हन्ता । हनिष्यति ॥ हन्तु, हतात् । हताम् । घ्नन्तु ॥ **हन्तेर्जः ६।४।३६॥** हौ परे ॥ **असिद्धवदत्राभात् ६।४।२२॥** इत ऊर्ध्वमापादसमाप्तेराभीयम्, समानाश्रये तस्मिन्कर्तव्ये तदसिद्धम् । इति जस्यासिद्धत्वान्न हेर्लुक् । जहि, हतात् । हतम् । हत । हनानि । हनाव । हनाम । अहन् ।

---

१ "अदो जग्धिः–" इत्यत्र 'अदः' इति वर्ततेऽत आह–अद इति ॥ २ 'अनुनासिक' इति लुप्तषष्ठ्यन्तं पृथक् पदम् । विशेषणत्वेन तदन्तविधिरित्याह–अनुनासिकान्तानामिति ॥ ३ "हो हन्ते –" "चजोः कु–" इत्याभ्यामनुवर्त्याह–हन्तेर्हस्येति ॥ ४ "ऋद्धनोः स्ये" इतीट् । ५ "शाहौ" इत्यतोऽनुवर्त्याह–हौ परे इति ॥

अहताम् । अघ्नन् । अहन् । अहतम् । अहत । अहनम् । अहन्व । अहन्म ॥ हन्यात् । हन्याताम् । हन्युः ॥ **आर्धधातुके २।४।३५॥** इत्यधिकृत्य ॥ **हनो वध लिङि २।४।४२॥ लुङि च । २।४।४३॥** वधादेशोऽदन्तः । आर्धधातुके इति विषयसप्तमी, तेन आर्धधातुकोपदेशे अकारान्तत्वादतो लोपः । वध्यात् । वध्यास्ताम् । आदेशस्यानेकाच्त्वादेकाच इतीड्निषेधाभावादिट् । अतो हलादेरिति वृद्धौ प्राप्तायाम्— ॥ **अचः परस्मिन् पूर्वविधौ ॥ १ । १ । ५७ ॥** पर[1]निमित्तोऽजादेशः स्थानिवत्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये ॥ इत्यल्लोपस्य स्थानिवत्त्वेनोपधात्वाभावान्न वृद्धिः ॥ अवधीत् । अहनिष्यत् ॥ यु मिश्रणामिश्रणयोः ॥ ॥ २ ॥ **उतो वृद्धिर्लुकि हलि ७ । ३ । ८९ ॥** लुग्विषये उतो वृद्धिः पिति हलादौ सार्वधातुके न त्वभ्यस्तस्य[2] । यौति । युतः । युवन्ति । यौषि । युथः । युथ । यौमि । युवः । युमः । युयाव । यविता । यविष्यति । यौतु । युतात् । अयौत् । अयुताम् । अयुवन् । युयात् । इह उतो वृद्धिर्न भाष्ये पिच्च ङिन्न, ङिच्च पिन्नेति व्याख्यानात् । युयाताम् । युयुः । यूयात् । यूयास्ताम् ।

---

१ " स्थानिवदादेश- " इति वर्तते । परस्मिन्निति निमित्तसप्तमीत्याह—परनिमित्त इति ॥ २ " नाभ्यस्तस्याचि-" इत्यतः ' नाभ्यस्तस्य पिति सार्वधातुके ' इति वर्तते । ' हलि ' इत्यस्य विशेषणत्वेन तदादिविधिरित्याह—हलादौ सार्वधातुक इति ॥

यूयासुः । अयावीत् । अयविष्यत् ॥ या प्रापणे ॥ ४ ॥ याति । यातः । यान्ति । ययौ । याता । यास्यति । यातु । अयात् । अयाताम् ॥ **लङः शाकटायनस्यैव ३ । ४ । १११॥** आद-न्तात्परस्य लङो झेर्जुस् वा स्यात् । अयुः, अयान् । यायात् । यायाताम् । यायुः । यायात् । यायास्ताम् । यायासुः । अयासीत् । अयास्यत् ॥ वा गतिगन्धनयोः ॥ ५ ॥ भा दीप्तौ ॥ ६ ॥ ष्णा शौचे ॥ ७ ॥ श्रा पाके ॥ ८ ॥ द्रा कुत्सायां गतौ ॥ ९ ॥ प्सा भक्षणे ॥ १० ॥ रा दाने ॥ ११ ॥ ला आदाने ॥ १२ ॥ दाप् लवने ॥ १३ ॥ पा रक्षणे ॥ १४ ॥ ख्या प्रकथने ॥ १५ ॥ अयं सार्वधातुके एव प्रयोक्तव्यः ॥ विद ज्ञाने ॥ १६ ॥ **विदो लटो वा ३ । ४ । ८३ ॥** वेत्तेर्लटः परस्मैपदानां णलादयो वा स्युः । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्म। पक्षे, वेत्ति। वित्तः । विदन्ति ॥ **उषविदजागृभ्योऽन्यतरस्याम् ३।१।३८॥** एभ्यो लिटि[4] आम्वा स्यात् । विदेरदन्तत्वप्रतिज्ञानादामि

---

१ " झेर्जुस् " " अतः " इत्यनुवर्त्त्याह–**आदन्तादिति** ॥ २ **सार्व-धातुक एवेति** ॥ एतन्मते " न ध्याख्या–" इति सूत्रे ख्याग्रहणं व्यर्थं स्यादिति बोध्यम् ॥ ३ " परस्मैपदानां णलतुस्–" इति सूत्रमेवानुवर्ततेऽत आह–**परस्मैपदानामिति** ॥ ४ " कास्प्रत्ययादाम्–" इत्यतः ' आममन्त्रे लिटि ' इत्यनुवर्ततेऽत आह–**लिटीति** ॥ ५ आमसन्निधौ निपातनादित्यर्थः । तेनाम् सन्निधान एवातो लोपस्य स्थानिवद्भावेन न गुणः ॥ आमोऽसन्निधाने तु ' वेदिता ' इत्यादौ गुणो भवत्येव ॥

न गुणः । विदाञ्चकार, विवेद । वेदिता । वेदिष्यति ॥ **विदांकुर्वन्त्वित्यन्यतरस्याम् ३ । १ । ४१** ॥ वेत्तेर्लोटि आम्, गुणाभावो, लोटो लुक्, लोडन्तकरोत्यनुप्रयोगश्च वा निपात्यते । पुरुषवचने न विवक्षिते ॥ **तनादिकृञ्भ्य उः ३।१।७९** ॥ तनादेः कृञश्च उः प्रत्ययः स्यात् । शपोऽपवादः । गुणौ । विदांकरोतु ॥ **अत उत्सार्वधातुके ६।४।११०** ॥ उप्रत्ययान्तस्य कृञोऽत उत्सार्वधातुके क्ङिति । विदाङ्कुरुतात् । विदाङ्कुरुताम् । विदाङ्कुर्वन्तु । विदाङ्कुरु । विदाङ्करवाणि । अवेत् । अवित्ताम् । अविदुः ॥ **दश्च ८।२।७५** ॥ धातोर्दस्य पदान्तस्य सिपि रुर्वा । अवेः, अवेत् । विद्यात् । विद्याताम् । विद्युः । विद्यात् । विद्यास्ताम् । अवेदीत् । अवेदिष्यत् ॥ अस भुवि ॥ १७ ॥ अस्ति ॥ **श्नसोरल्लोपः ६।४।१११** ॥ श्नस्यास्तेश्चातो लोपः सार्वधातुके क्ङिति । स्तः । सन्ति । असि ।

---

१ "ज्वलितिकसन्तेभ्यः—" इत्यत्रेवेतिशब्दस्य प्रकारार्थकत्वेन फलितमाह—**पुरुषेति** ॥ २ "कर्तरि शप्" "सार्वधातुके यक्" इत्याभ्यां 'कर्तरि, सार्वधातुके' इत्यनुवृत्तिफलितमाह—**शपोऽपवाद इति** ॥ ३ ऋकारस्य गुण आर्धधातुकनिमित्तः । उकारस्य गुणः सार्वधातुकनिमित्तः ॥ ४ "गमहनजन—" इत्यतः 'क्ङिति' इति, "उतश्च प्रत्ययात्—" इति षष्ठीविपरिणतम्, "नित्यं करोतेः" इत्यतः 'करोतेः' इति च वर्तते ऽत आह—**उप्रत्ययान्तस्येति** ॥ ५ "पदस्य" "सिपि धातोरुर्वा" इति वर्तते ऽत आह—**धातोरिति** ॥ ६ "गमहनजन—" इत्यतः 'क्ङिति' इति "अत उत्सार्वधातुके" इत्यतः "सार्वधातुके" इति वर्तते । 'श्नसोः' इति चकरन्वादिरित्याह—**श्नस्यास्तेश्चेति** ॥

स्थः । स्थ । अस्मि । स्वः । स्मः ॥ **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ८।३।८७** ॥ उपसर्गेणः प्रादुसश्चास्तेः सस्य षो यकारेऽचि च परे । निष्यात् । प्रनिषन्ति । प्रादुःषन्ति । यच्परः किम्-अभिस्तः ॥ **अस्तेर्भूः २।४।५२** ॥ आर्धधातुके । बभूव । भविता । भविष्यति । अस्तु, स्तात् । स्ताम् । सन्तु ॥ **घ्वसोरेद्धावभ्यासलोपश्च ६।४।११९** ॥ घोरस्तेश्च एत्त्वं स्याद्धौ परे अभ्यासलोपश्च । एत्त्वस्यासिद्धत्वाद्धेर्धिः । श्नसोरित्यल्लोपः । तातङ्पक्षे एत्त्वं न । परेण तातङा बाधात् । एधि, स्तात् । स्तम् । स्त । असानि । असाव । असाम ॥ आसीत् । आस्ताम् । आसन् ॥ स्यात् । स्याताम् । स्युः ॥ भूयात् । अभूत् । अभविष्यत् ॥ इण गतौ ॥ १८ ॥ एति । इतः ॥ **इणो यण् ६ । ४ । ८१** ॥ अजादौ प्रत्यये परे ।

---

१ "अपदान्तस्य मूर्धन्यः" "सहेः साडः सः" "इण्कोः" इत्येभ्यः समस्तान् 'इणः सः मूर्धन्यः' इत्यनुवर्त्य—उपसर्गेण इति ॥ 'अस्ति, यच्परः' इति षष्ठ्यर्थे प्रथमेति भावः ॥ २ "आर्धधातुके" इत्यधिकृतम् ॥ ३ "असिद्धवदत्राभात्" इत्यनेनासिद्धत्वाज्झलन्तत्वेन हेर्धिरित्यर्थः ॥ ४ यद्यपि "अतो गुणे" इति पररूपेण सिद्धं तथापि परत्वादाकारत्वाच्चाल्लोप एव न्याय्यः ॥ ५ तातङि कृते तस्य स्थानिवद्भावेन 'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इत्याश्रयणेन प्राप्नोत्येत्त्वमिति तु न वाच्यम् । लक्ष्यानुरोधेनात्र पुनः प्रसङ्गविज्ञानस्यानाश्रयणात् 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव' इत्यस्यैवाश्रयणादिति बोध्यम् ॥ ६ स्थानिवद्भावेनाल्विधित्वान्निषेधात् [illegible] "अस्तिसिचोऽपृक्ते" इत्यनेन प्राप्नोतीति न वाच्यम् । अत्रास्ति तकारान्त्वाभावादिति [illegible] ॥ ७ [illegible] ॥ [illegible] "[illegible] ऽनु—' [illegible] [illegible]—अजादावित्ति ॥

यन्ति ॥ **अभ्यासस्यासवर्णे ६ । ४ । ७८ ॥** अभ्यासस्य इवर्णोवर्णयोरियङुवङौ स्तोऽसवर्णेऽचि । इयाय ॥ **दीर्घ इणः किति ७ । ४ । ६९ ॥** इणोऽभ्यासस्य दीर्घः स्यात् किति लिटि । ईयतुः । ईयुः । इययिथ, इयेथ । एता । एष्यति । एतु । ऐत् । ऐताम् । आयन् । इयात् ॥ **एतेर्लिङि ७ । ४ । २४ ॥** उपसर्गात्परस्य इणोऽणो ह्रस्व आर्धधातुके किति लिङि । निरियात् । उभयत आश्रयणे नान्तादिवत् । अभीयात् । अणः किम्—समेयात् ॥ **इणो गा लुङि २ । ४ । ४५ ॥** गातिस्थेति सिचो लुक् । अगात् । ऐष्यत् ॥ शीङ् स्वप्ने ॥ १९ ॥ **शीङः सार्वधातुके गुणः ७ । ४ । २१ ॥** क्ङिति चेत्यस्यापवादः । शेते । शयाते ॥ **शीङो रुट् ७ । १ । ६ ॥** शीङः परस्य झादेशस्यातो रुडा-

---

१ "अचि श्नुधातु—" इत्यतः 'य्वो इयङुवङौ अचि' इत्यनुवर्त्याह—इवर्णेत्यादि ॥ २ "अत्र लोप—" "व्यथो लिटि—" इत्याभ्याम् 'अभ्यासस्य' 'लिटि' इत्यनुवर्त्याह—अभ्यासस्येति ॥ ३ "लुङ्लङ्लृङ्क्ष्वडुदात्त." इति द्विलकारनिर्देशेन लावस्थायामेवाडागमविधानेन यणादेशादन्तरङ्गत्वादाडागमे कृते यणादेश एव वृद्ध्यपेक्षया परत्वादाङ्गत्वाच्चेति भावः । एवमेव 'आसन्' इत्येतत्सिद्धिः ॥ ४ "केऽणः" "उपसर्गाद्ध्रस्व ऊहतेः" इत्यतोऽनुवर्त्याह—उपसर्गादिति ॥ ५ उपसर्गत्वस्य इण्धातुत्वस्योभयस्याश्रयणमत्राशीर्मिति नान्तादिवदिति ॥ ह्रस्वो नेति भाव. ॥ ६ "झोऽन्तः" "अदभ्यस्तात्" इत्यतोऽनुवर्त्याह—झादेशस्यात इति ॥

गमः स्यात् । शेरते । शेषे । शयाथे । शेध्वे । शये । शेवहे । शेमहे । शिश्ये । शिश्याते । शिश्यिरे । शयिता । शयिष्यते । शेताम् । शयाताम् । अशेत । अशयाताम् । अशेरत । शयीत । शयीयाताम् । शयीरन् । शयिषीष्ट । अशयिष्ट । अशयिष्यत ॥ इङ् अध्ययने ॥ २० ॥ इङिकावध्युपसर्गतो न व्यभिचरतः । अधीते ॥ अधीयाते । अधीयते ॥ **गाङ् लिटि २ । ४ । ४९ ॥** इङो गाङ् स्याल्लिटि । अधिजगे । अधिजगाते । अधिजगिरे । अध्येता । अध्येष्यते । अधीताम् । अधीयाताम् । अधीयताम् । अधीष्व । अधीयाथाम् । अधीध्वम् । अध्ययै । अध्ययावहै । अध्ययामहै । अध्यैत । अध्यैयाताम् । अध्यैयत । अध्यैथाः । अध्यैयाथाम् । अध्यैध्वम् । अध्यैयि । अध्यैवहि । अध्यैमहि । अधीयीत । अधीयीयाताम् । अधीयीरन् । अध्येषीष्ट ॥ **विभाषा लुङ्लृङोः । २ । ४ । ५० ॥** इङो गाङ् वा स्यात् ॥ **गाङ्कुटादिभ्योऽञ्णिन्ङित् १।२।१॥** गाङादेशात्कुटादिभ्यश्च परेऽञ्णितः प्रत्यया ङितः स्युः ॥ **घुमास्थागापाजहातिसां हलि ६।४।६६ ॥**

---

१ 'दाणोंदात्त बलीय' इति पूर्वमियङादेशे कृते वार्ण दीर्घादीति भाव' ॥
२ "इङश्च" इत्यतोऽनुवर्त्याह–इङ इति ॥ 'लिटि' इति द्विलकारकनिर्देशात् 'लधारादौ लिटि' इत्यर्थस्वीकारेण नात्र 'द्विर्वचनेऽचि' इति निषेध. ॥
३ "इङश्च" "गाङ् लिटि" इत्याभ्यामनुवर्त्याह–इङो गाङिति ॥

एषामात इत्स्याद्धलादौ क्ङित्यार्धधातुके । अध्यगीष्ट,अध्यैष्ट । अध्यगीष्यत, अध्यैष्यत ॥ दुह प्रपूरणे ॥ २१ ॥ दोग्धि । दुग्धः । दुहन्ति । धोक्षि । दुग्धे । दुहाते । दुहते । धुक्षे । दुहाथे । धुग्ध्वे । दुहे । दुह्वहे । दुह्महे । दुदोह, दुदुहे । दोग्धासि, दोग्धासे । धोक्ष्यति, धोक्ष्यते । दोग्धु, दुग्धात् । दुग्धाम् । दुहन्तु । दुग्धि, दुग्धात् । दुग्धम । दुग्ध । दोहानि । दोहाव । दोहाम । दुग्धाम् । दुहाताम् । दुहताम् । धुक्ष्व । दुहाथाम् । धुग्ध्वम् । दोहै । दोहावहै । दोहामहै । अधोक् । अदुग्धाम् । अदुहन् । अदोहम् । अदुग्ध । अदुहाताम् । अदुहत । अधुग्ध्वम् । दुह्यात्, दुहीत ॥ **लिङ्सिचावात्मनेपदेषु १।२।११** ॥ इक्समीपाद्धलः परौ झलादी लिङ्सिचौ कितौ स्तस्तङि । धुक्षीष्ट ॥ **शल इगुपधादनिटः क्सः ३।१।४५** ॥ इगुपधो यः शलन्तस्तस्मादनिटश्च्लेः क्सादेशः स्यात् । अधुक्षत् ॥ **लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ७।३।७३** ॥ एषां क्सस्य लुग्वा स्याद्दन्त्ये तङि । अदुग्ध, अधुक्षत ॥ **क्सस्या-**

---

१ "आर्धधातुके" "दीडो युडचि क्ङिति" 'ईद्यति' 'आतो लोप इटि' इत्येभ्योऽनुवर्त्याह-आत इत्यादि ॥ २ "इको झल्" "हलन्ताच्च" 'असंयोगाल्लिट्' इत्येभ्योऽनुवर्त्याह-इक्समीपादिति ॥ ३ 'च्लेः सिच्' इत्यतोऽनुवर्त्याह-इगुपधो य इत्यादि ॥ ४ "क्सस्याचि" इत्यतोऽनुवर्त्याह--क्सस्येति ॥ "घोर्लोपो लेटि वा" इत्यतो 'लोप' इति वर्तमाने लुग्विधानसामर्थ्याल्लुक्श्लुलुपः सर्वादेशा भवन्ति इति ज्ञाप्यत इति भावः ॥

च्चि ७।३।७२ ॥ अजादौ तेङि क्सस्य लोपः । अधुक्षाताम् । अधुक्षन्त । अदुग्धाः, अधुक्षथाः । अधुक्षाथाम् । अधुग्ध्वम्, अधुक्षध्वम् । अधुक्षि । अदुह्वहि, अधुक्षावहि । अधुक्षामहि । अधोक्ष्यत ॥ एवम्--दिह उपचये ॥ २२ ॥ लिह आस्वादने ॥२३॥ लेढि । लीढः लिहन्ति । लेक्षि । लीढे । लिहाते । लिहते । लिक्षे । लिहाथे । लीढ्वे। लिलेह, लिलिहे । लेढासि, लेढासे । लेक्ष्यति, लेक्ष्यते । लेढु । लीढाम् । लिहन्तु । लीढि । लेहानि । लीढाम् । अलेट्, अलेड् । अलिक्षत्, अलीढ, अलिक्षत । अलेक्ष्यत, अलेक्ष्यत ॥ ब्रूञ् व्यक्तायां वाचि ॥ २४ ॥ **ब्रुवः पञ्चानामादित आहो ब्रुवः ३।४।८४ ॥** ब्रुवो लटस्तिबादीनां पञ्चानां णलादयः पञ्च वा स्युर्ब्रुवश्चाहादेशः । आह । आहतुः । आहुः ॥ **आहस्थः ८।२।३५ ॥**

---

१ "घोर्लोपो लेटि" इत्यतः 'लोपः' इत्यनुवर्त्य "लुग्वा दुहदिह--" इत्यत 'आत्मनेपदे' इत्यपकृष्याह--तङि इत्यादि ॥ २ 'दन्तोष्ठयो वः स्मृतो बुधैः' इति शिक्षा 'वकारो दन्तोष्ठोभयस्थान' इति सूचयति' इति मन्यमानस्य कैयटस्यानुरोधेनेदम् ॥ 'उवोपोपध्मा ओष्ठे' इति कात्यायनप्रातिशाख्यानुरोधिनपदान्तसूत्रस्थमहाभाष्यानुसारेण वकारस्योष्ठस्थानकत्वमेवेति मन्यमानानामस्माकं मते तु न भवत्येवात्र लुगिति 'अदुह्वहि' इतिप्रयोगो लङ्येव भवति । 'अदुह्वहि' इति प्रयोगो वेदे तु वैदिक । लौकिकस्तु प्रामादिक एवेति योग्यम् ॥ ३ "परस्मैपदानां णलतुसुस्--" "विदो लटो वा" इत्याभ्यामनुवर्त्याह--लटस्तिबादीनामित्यादि ॥

झलि परे । चर्त्वम् । आत्थ आहथुः ॥ **ब्रुव ईट् ७।३।९३ ॥** ब्रुवः परस्य हलादेः पित ईट् स्यात् । ब्रवीति । ब्रूतः । ब्रुवन्ति । ब्रूते । ब्रुवाते । ब्रुवते ॥ **ब्रुवो वचिः २।४।५३ ॥** आर्धधातुके । उवाच । ऊचतुः । ऊचुः । उवचिथ, उवक्थ । ऊचे । वक्तासि, वक्तासे । वक्ष्यति, वक्ष्यते । ब्रवीतु, ब्रूतात् । ब्रुवन्तु । ब्रूहि । ब्रवाणि । ब्रूताम् । ब्रुवै । अब्रवीत्, अब्रूत । ब्रूयात्, ब्रुवीत । उच्यात्, वक्षीष्ट ॥ **अस्यतिवक्तिख्यातिभ्योऽङ् ३।१।२२॥** एभ्यश्च्लेरङ् स्यात् ॥ **वच उम् ७।४।२० ॥** अङि परे । अवोचत्, अवोचत । अवक्ष्यत्, अवक्ष्यत । (ग०) ( चर्करीतं च ) ।चर्करीतमिति यङ्लुगन्तस्य संज्ञा, तददादौ बोध्यम् ॥ ऊर्णुञ् आच्छादने ॥ २५ ॥ **ऊर्णोतेर्विभाषा ७।३।९० ॥** वा वृद्धिः स्याद्धलादौ पिति सार्वधातुके । ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवन्ति । ऊर्णुते । ऊर्णुवाते । ऊर्णुवते । (ऊर्णोतेराम्नेति वाच्यम् ) ॥ **न न्द्राः संयोगादयः ६ ।**

---

१ "झलो झलि" "हो ढ." इत्याभ्या ' ह, झलि ' इत्यनुवर्ततेऽत आह–झलि पर इति ॥ झलि परतस्थत्वविधानात् " ब्रुव ईट्" इति न भवति ॥ २ "नाभ्यस्तस्याचि पिति सार्वधातुके" " उतो वृद्धिर्लुकि हलि " इत्याभ्यामनुवर्त्याह–हलादेः पित इत्यादि ॥ ३ " आर्धधातुके " इत्यधिकृत्याह–आर्धधातुक इति ॥ ४ "च्लेः सिच् " इत्यतोऽनुवर्त्याह–च्लेरिति ॥ ५ " ऋदृशोऽङि गुणः" इत्यतोऽनुवर्त्याह–अङि परे इति ॥ ६ " नाभ्यस्तस्याचि– ", " उतो वृद्धिर्लुकि हलि " इत्याभ्यामनुवर्त्याह–वृद्धिरित्यादि ॥

१।३ ॥ अचैः पराः संयोगादयो नदरा द्विर्न भवन्ति । नुशब्दस्य द्वित्वम् । ऊर्णुनाव । ऊर्णुनुवतुः । ऊर्णुनुवुः ॥ **विभाषोर्णोः १।२।३॥** इडादिप्रत्ययो वा ङित्स्यात् । ऊर्णुनुविथ, ऊर्णुनविथ । ऊर्णुविता, ऊर्णविता । ऊर्णुविष्यति, ऊर्णविष्यति । ऊर्णोतु, ऊर्णौतु । ऊर्णवानि । ऊर्णवै ॥ **गुणोऽपृक्ते ७। ३ । ९१ ॥** ऊर्णोतेर्गुणोऽपृक्ते हलादौ पिति सार्वधातुके । वृद्ध्यपवादः । और्णोत् । और्णोः । ऊर्णुयात् । ऊर्णुयाः । ऊर्णुवीत । ऊर्णूयात् । ऊर्णुविषीष्ट, ऊर्णविषीष्ट ॥ **ऊर्णोतेर्विभाषा ७ । २ । ६ ॥** ईडादौ सिचि वा वृद्धिः परस्मैपदे परे । पक्षे गुणः । और्णावीत्, और्णुवीत्, और्णवीत् । और्णाविष्टाम्, और्णुविष्टाम्, और्णविष्टाम् । और्णुविष्ट, और्णविष्ट । और्णुविष्यत्, और्णुविष्यत् ; और्णविष्यत; और्णविष्यत ॥

॥ इत्यदादयः ॥ २ ॥

## अथ जुहोत्यादयः ।

हु दानादनयोः ॥ १ ॥ **जुहोत्यादिभ्यः श्लुः २।४।७५॥**

---

१ " एकाचो द्वे प्रथमस्य " "अजादेर्द्वितीयस्य" इत्यविकृत्याह–अचः परा इति॥ २ "विज इट्" "गाङ्कुटादिभ्य –" इत्याभ्यामनुवर्त्याह–इडादिप्रत्यय इति ॥ ३ "नाभ्यस्तस्याचि–" " उतो वृद्धिर्लुकि–" " ऊर्णोतेर्विभाषा " इत्येभ्योऽनुवर्त्याह–ऊर्णोतेरित्यादि ॥ ४ " सिचि वृद्धिः परस्मैपदेषु " " नेटि " इत्याभ्यामनुवर्त्याह–इडादाविति ॥

शपः श्लुः स्यात् ॥ श्लौ ६ । १ । १० ॥ धातोर्द्वे स्तः । जुहोति । जुहुतः ॥ **अदभ्यस्तात** ७ । १ । ४ ॥ झस्यात्स्यात् । हुश्नुवोरिति यण् । जुह्वति ॥ **भीह्रीभृहुवां श्लुवच्च** ३ । १ । ३९ ॥ एभ्यो लिटि आम् वा स्यादामि श्लाविव कार्यं च । जुहवाञ्चकार, जुहाव । होता । होष्यति । जुहोतु, जुहुतात् । जुहुताम् । जुह्वतु । जुहुधि । जुहवानि । अजुहोत् । अजुहुताम् ॥ **जुसि च** ॥ ७ । ३ । ८३ ॥ इगन्ताङ्गस्य गुणोऽजादौ जुसि । अजुहवुः । जुहुयात् । हूयात् । अहौषीत् । अहोष्यत् ॥ ञिभी भये ॥ २ ॥ बिभेति ॥ **भियोऽन्यतरस्याम्** ६ । ४ । ११५ ॥ इकारो वा स्याद्धलादौ क्ङिति सार्वधातुके । बिभितः, बिभीतः । बिभ्यति । बिभयाञ्चकार, बिभाय । भेता । भेष्यति । बिभेतु, बिभितात्, बिभी-

---

१ "अदिप्रभृतिभ्यः-" इत्यतोऽनुवर्त्याह-**शप इति** ॥ २ "एकाचो द्वे प्रथमस्य" "अजादेर्द्वितीयस्य" "लिटि धातोरनभ्यासस्य" इत्येभ्योऽनुवर्त्याह-**धातोरित्यादि** ॥ ३ "झोऽन्तः" इत्यतोऽनुवर्त्याह-**झस्येति** ॥ ४ "कास्प्रत्ययादाम्-" इत्यतोऽनुवर्त्याह-**लिटि आमिति** ॥ ५ "मिदेर्गुणः" इत्यतोऽनुवृत्तेन गुणपदेनोपस्थितस्य 'इक' इत्येतस्य विशेषणत्वेन तदन्तविधिः. "अङ्गस्य" इत्यधिक्रियते चेत्यत आह-**इगन्ताङ्गस्येति । अजादाविति** ॥ जागृयुः शृणुयुरित्यादौ गुणवारणाय "क्सस्याचि" इत्यतोऽनुवृत्तेऽच्पदे विशेषणत्वेन तदादिविधिरिति भावः ॥ ६ "गमहनजन-" इत्यतः 'क्ङिति' इति "ई हल्यघोः" इत्यतः 'हलि' इति "अत उत् सार्वधातुके" इत्यतः 'सार्वधातुके' इति "इद्दरिद्रस्य" इत्यतः 'इत्' इति वर्तते इत्यत आह-**इकारो वेति** ॥

ते । माता । मास्यते । मिमीताम् । अमिमीत । मिमीत । मासीष्ट । मास्त । अमास्यत ॥ ओहाङ् गतौ ॥ ७ ॥ जिहीते । जिहाते । जिहते । जहे । हाता । हास्यते । जिहीताम् । अजिहीत । जिहीत । हासीष्ट । अहास्त । अहास्यत् ॥ डुभृञ् धारणपोषणयोः ॥ ८ ॥ बिभर्ति । बिभृतः । बिभ्रति । बिभृते । बिभ्राते । बिभ्रते । बिभराञ्चकार, बभार । बभर्थ । बभृव । बिभराञ्चक्रे, बभ्रे । भर्तासि, भर्तासे । भरिष्यति, भरिष्यते । बिभर्तु । बिभराणि । बिभृताम् । अबिभः । अबिभृताम् । अबिभरुः । अबिभृत । बिभृयात्, बिभ्रीत । भ्रियात्, भृषीष्ट । अभार्षीत्, अभृत । अभरिष्यत्, अभरिष्यत ॥ डुदाञ् दाने ॥९॥ ददाति । दत्तः । ददति । दत्ते । ददाते । ददते । ददौ, ददे । दातासि, दातासे । दास्यति, दास्यते । ददातु ॥ **दाधा घ्वदाप्** १ । १ । २० ॥ दारूपा धारूपाश्च धातवो घुसंज्ञाः स्युर्दाप्दैपौ विना । घ्वसोरित्येत्त्वम् । देहि । दत्तम् । अददात्, अदत्त । दद्यात्, ददीत । देयात्, दासीष्ट । अदात् । अदाताम् । अदुः ॥ **स्थाघ्वोरिच्च** १ । २ । १७ ॥ अनयोरिदन्तादेशः,सिच्च कित्स्यादात्मनेपदे । अदित । अदास्यत्, अदास्यत ॥ डुधाञ् धारणपोषणयोः ॥ १० ॥ दधाति ॥ **दधस्तथोश्च** ८ । २ । ३८ ॥ द्विरुक्तस्य झषन्तस्य धाञो बशो भष् स्यात्तथोः स्ध्वोश्च परतः । धत्तः ।

---

'असंयोगात् लिट्—" "लिङ्सिचावात्मनेपदेषु" "हन सिच्" इत्येभ्योऽनुवर्त्याह—सिच्च किदिति ॥ २ " एकाचो बशो भष् झषन्तस्य स्ध्वोः." इतोऽनुवर्त्याह—झषन्तस्येति ॥

दधति । दधासि । धत्थः । धत्थ । धत्ते । दधाते । दधते । धत्से । धद्ध्वे । ध्वसोरेद्धावभ्यासलोपश्च । धेहि । अदधात्, अधत्त । दध्यात्, दधीत । धेयात्, धासीष्ट । अधात्, अधित । अधास्यत्, अधास्यत ॥ णिजिर् शौचपोषणयोः ॥ ११ ॥ ( वा. ) इर इत्संज्ञा वाच्या ॥

**निजां त्रयाणां गुणः श्लौ ७ । ४ । ७५ ॥** णिज्विज्विषा-भ्यासस्य[1] गुणः स्यात् श्लौ । नेनेक्ति । नेनिक्तः । नेनिजति । नेनिक्ते । निनेज, निनिजे । नेक्ता । नेक्ष्यति, नेक्ष्यते । नेनेक्तु । नेनिग्धि ॥

**नाभ्यस्तस्याचि पिति सार्वधातुके ७ । ३ । ८७ ॥** लघूपधगुणो[2] न स्यात् । नेनिजानि । नेनिक्ताम् । अनेनेक् । अनेनि-क्ताम् । अनेनिजुः । अनेनिजम् । अनेनिक्त । नेनिज्यात् । नेनिजीत । निज्यात्, निक्षीष्ट ॥ **इरितो वा ३ । १ । ५७ ॥** इरितो धातो-श्च्लेरङ्[3] वा परस्मैपदेषु । अनिजत्, अनैक्षीत्, अनिक्त । अनेक्ष्यत्, अनेक्ष्यत ॥

॥ इति जुहोत्यादयः ॥

## अथ दिवादयः ।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु ॥

---

१ "अत्र लोपोऽभ्यासस्य" इत्यतोऽनुवर्त्याह—अभ्यासस्येति ॥ २ "मिदेर्गुण" "पुगन्तलघूपधस्य—" इत्याभ्यामनुवर्त्याह—लघूपधगुण इति ॥ ३ "च्लेः सिच्" "अस्यतिवक्तिख्यातिभ्य —" "पुषादिद्युताद्यॢदितः—" इत्येभ्योऽनुवर्त्याह—च्लेरङिति ॥

॥ १ ॥ **दिवादिभ्यः श्यन् ३ । १ । ६९ ॥** शपोऽपवादः । हलि चेति दीर्घः । दीव्यति । दिदेव । देविता । देविष्यति । दीव्यतु। अदीव्यत्। दीव्येत्। दीव्यात् । अदेवीत् । अदेविष्यत् ॥ एवम् ॥ षिवु तन्तुसन्ताने ॥ २ ॥ नृती गात्रविक्षेपे ॥ ३ ॥ नृत्यति । ननर्त । नर्तिता ॥ **सेऽसिचि कृतचृतछृदतृदनृतः ७ । २ । ५७ ॥** एभ्यः परस्य सिज्भिन्नस्य सादेरार्धधातुकस्येड्वा । नर्तिष्यति, नर्त्स्यति । नृत्यतु । अनृत्यत् । नृत्येत् । नृत्यात् । अनर्तीत् । अनर्तिष्यत्, अनर्त्स्यत् ॥ त्रसी उद्वेगे ॥ ४ ॥ वा भ्राशेति श्यन्वा । त्रस्यति, त्रसति । तत्रास ॥ **वा जॄभ्रमुत्रसाम् ६ । ४ । १२४ ॥** एषां किति लिटि सेटि थलि च एत्वाभ्यासलोपौ वा । त्रेसतुः, तत्रसतुः । त्रेसिथ, तत्रसिथ । त्रसिता ॥ शो तनूकरणे ॥ ५ ॥ **ओतः श्यनि ७ । ३ । ७१ ॥** लोपः स्यात् । श्यति । श्यतः । श्यन्ति । शशौ । शशतुः । शाता । शास्यति ॥ **विभाषा घ्राधेट्शाच्छासः २ । ४ । ७८ ॥** एभ्यस्सिचो लुग्वा स्यात् परस्मैपदे परे । अशात्।

१ "सार्वधातुके यक्" "कर्तरि शप्" इत्याभ्यामनुवर्त्य फलितमाह–**शपोपवाद इति** ॥ २ "वसतिक्षुधोरिट्" "उदितो वा" इत्याभ्यामनुवर्त्याह–**इड्वेति** ॥ ३ जॄधातोर्गुणत्वेन भ्रमुधातोरादेशादित्वेनानेकहल्मध्यस्थत्वेन च, त्रसधातोरनेकहल्मध्यस्थत्वेनाप्राप्तौ एत्वाभ्यासलोपौ विकल्प्येते इत्याह–**किति लिटीति** ॥ ४ "घोर्लोपो लेटि" इत्यतोऽनुवृत्तमाह–**लोप इति**॥ ५ "ण्यक्षत्रियार्षञितः–" "गातिस्थाघुपाभूभ्यः–" इत्याभ्यामनुवर्त्याह–**सिच इति** ॥

अशाताम् । अशुः ॥ इट्सकौ । अशासीत् । अशासिष्टाम् ॥ छो छेदने ॥ ६ ॥ छ्यति ॥ षोऽन्तकर्मणि ॥ ७ ॥ स्यति । ससौ ॥ दोऽवखण्डने ॥ ८ ॥ द्यति । ददौ । देयात् । अदात् ॥ व्यध ताडने ॥९॥ **ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च ६ । १ । १६ ॥** एषां सम्प्रसारणं[1] स्यात्किति ङिति च । विध्यति । विव्याध । विविधतुः । विविधुः । विव्यधिथ, विव्यद्ध । व्यद्धा । व्यत्स्यति । विध्येत् । विध्यात् । अव्यात्सीत् ॥ पुष पुष्टौ ॥ १० ॥ पुष्यति । पुपोष । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादीत्यङ् । अपुषत् ॥ शुष शोषणे ॥ ११ ॥ शुष्यति । शुशोष । अशुषत् ॥ णश अदर्शने ॥ १२ ॥ नश्यति ॥ ननाश । नेशतुः ॥ **रधादिभ्यश्च ७ । २ । ४५ ॥** रध् नश् तृप् दृप् द्रुह् मुह् ष्णुह् ष्णिह् एभ्यो वलाद्यार्धधातुकस्य[2] वेट् स्यात् । नेशिथ ॥ **मस्जिनशोर्झलि ७ । १ । ६० ॥** नुम्[3] स्यात् । ननंष्ठ । नेशिव नेश्व । नेशिम, नेश्म । नशिता, नंष्टा । नशिष्यति, नङ्क्ष्यति । नश्यतु । अनश्यत् । नश्येत् । नश्यात् । अनशत् ॥ षूङ् प्राणिप्रसवे ॥ १३ ॥ सूयते । सुषुवे । क्रादिनियमादिट् । सुषुविषे । सुषुविवहे । सुषुविमहे । सविता, सोता ॥ दूङ् परितापे ॥ १४ ॥ दूयते ॥ दीङ्

---

१ "ष्यङः संप्रसारणम्" इत्यतोऽनुवर्त्याह-संप्रसारणमिति ॥ २ "आर्धधातुकस्येड्–" इत्यत. "स्वरतिसूतिसूयति–" इत्यतश्चानुवर्त्याह–वलाद्येति ॥ ३ "इदितो नुम् धातोः" इत्यतोऽनुवर्त्याह–नुमिति ॥

ध्ययं ॥ १५ ॥ दीयते ॥ **दीङो युडचि क्ङिति ६।४।६३॥** दीङः परस्याजादेः क्ङित आर्धधातुकस्य युट् । ( वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ ) । दिदीये ॥ **मीनातिमिनोतिदीङां ल्यपि च ६।१।५०॥** एषामात्व स्याल्ल्यपि चादशित्येज्निमित्ते । दाता । दास्यति । (स्थाघ्वोरित्त्वे दीङः प्रतिषेधः) । अदास्त ॥ डीङ् विहायसा गतौ ॥ १६ ॥ डीयते । डिड्ये । डयिता ॥ पीङ् पाने ॥ १७ ॥ पीयते । पेता । अपेष्ट ॥ माङ् माने ॥ १८ ॥ मायते । ममे ॥ जनी प्रादुर्भावे ॥ १९ ॥ **ज्ञाजनोर्जा ७।३।७९ ॥** अनयोर्जादेशः स्याच्छिति । जायते । जज्ञे । जनिता । जनिष्यते ॥ **दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम् ३।१।६१ ॥** एभ्यश्च्लेश्चिण् वा स्यादेकवचने तशब्दे परे ॥ **चिणो लुक् ६।४।१०४॥** चिणः परस्य लुक् स्यात् ॥ **जनिवध्योश्च ७।३।३५ ॥** अनयोरुपधाया वृद्धिर्न स्याच्चिणि ञ्णिति कृति च । अजनि, अजनिष्ट ॥

---

१ "आर्धधातुके" इत्यधिकृत्याह–आर्धधातुकस्येति ॥ २ तेन "असिद्धवदत्राभात्" इत्यसिद्धत्वं नेत्यर्थः ॥ ३ "आदेच उपदेशेऽशिति" इत्यनुवर्त्याह–आत्वमित्यादि ॥ ४ "ष्ठिवुक्लमुचमाम्–" इत्यतोऽनुवर्त्याह–शितीति ॥ ५ "चिण् ते पदः" "च्लेः सिच्" इत्याभ्यामनुवर्त्याह–च्लेरिति ॥ ६ "अङ्गस्य" इत्यधिकाराच्चिणन्तस्याङ्गत्वप्रयोजकस्यान्यप्रत्ययस्यासंभवात्प्रत्ययस्यैव लुगिति भाव ॥ ७ "मृजेर्वृद्धिः" "अचो ञ्णिति" "अत उपधायाः" "आतो युक्चिण्कृतोः" "नोदात्तोपदेशस्य–" इत्येभ्योऽनुवर्त्याह–उपधाया इति ॥

दीपी दीप्तौ ॥ २० ॥ दीप्यते । दिदीपे । अदीपि, अदीपिष्ट ॥ पद गतौ ॥ २१ ॥ पद्यते । पेदे । पत्ता । पत्सीष्ट ॥ **चिण् ते पदः ३।१।६०** ॥ पदश्च्लेश्चिण् स्यात्तशब्दे परे । अपादि । अपत्साताम् । अपत्सत ॥ विद सत्तायाम् ॥ २२ ॥ विद्यते । वेत्ता । अवित्त ॥ बुध अवगमने ॥ २३ ॥ बुध्यते । बोद्धा । भोत्स्यते । भुत्सीष्ट । अबोधि, अबुद्ध । अभुत्साताम् ॥ युध सम्प्रहारे ॥ २४ ॥ युध्यते । युयुधे । योद्धा । अयुद्ध ॥ सृज विसर्गे ॥ २५ ॥ सृज्यते । ससृजे । ससृजिषे ॥ **सृजिदृशोर्झल्यमकिति ६।१।५८** ॥ अनयोरमागमः स्याज्झलादावकिति । स्रष्टा । स्रक्ष्यति । सृक्षीष्ट । असृष्ट । असृक्षाताम् ॥ मृष तितिक्षायाम् ॥ २६ ॥ मृष्यति, मृष्यते । ममर्ष । ममर्षिथ । ममृषिषे । मर्षितासि । मर्षिष्यति, मर्षिष्यते ॥ णह बन्धने ॥ २७ ॥ नह्यति, नह्यते । ननाह । नेहिथ, ननद्ध । नेहे । नद्धा । नत्स्यति । अनात्सीत्, अनद्ध ॥

॥ इति दिवादयः ॥ ४ ॥

## ॥ अथ स्वादयः ॥

षुञ् अभिषवे ॥ १ ॥ **स्वादिभ्यः श्नुः ३।१।७३** ॥ शपोऽपवादः । सुनोति । सुनुतः । हुश्नुवोरिति यण् । सुन्वन्ति । सुन्वः,

---

१ "च्लेः सिच्" इत्यतोऽनुवर्त्याह—च्लेरिति ॥ २ "सार्वधातुके यक्" "कर्तरि शप्" इत्यतः 'कर्तरि, सार्वधातुके' इत्यनुवृत्तेः फलमाह—शपोऽपवाद इति ॥

सुनुवः । सुनुते । सुन्वाते । सुन्वते । सुन्वहे, सुनुवहे । सुषाव, सुषुवे । सोता । सुनु । सुनवानि, सुनवै । सुनुयात् । सूयात् ॥ **स्तुसुधूञ्भ्यः परस्मैपदेषु ७।२।७२ ॥** एभ्यस्सिच इट् स्यात्परस्मैपदेषु । असावीत्, असोष्ट ॥ चिञ् चयने ॥ २ ॥ चिनोति, चिनुते ॥ **विभाषा चेः ७।३।५८ ॥** अभ्यासात्परस्य कुत्वं वा स्यात्सनि लिटि च । चिकाय, चिचाय; चिक्ये, चिच्ये । अचैषीत्, अचेष्ट ॥ स्तृञ् आच्छादने ॥ ३ ॥ स्तृणोति, स्तृणुते ॥ **शर्पूर्वाः खयः ७।४।६१ ॥** अभ्यासस्य शर्पूर्वाः खयः शिष्यन्तेऽन्ये हलो लुप्यन्ते । तस्तार । तस्तरतुः । तस्तरे । गुणोर्तीति गुणः । स्तर्यात् ॥ **ऋतश्च संयोगादेः ७।२।४३ ॥** ऋदन्तात्संयोगादेः परयोर्लिङ्सिचोरिड्वा स्यात्तङि । स्तरिषीष्ट, स्तृषीष्ट । अस्तरिष्ट, अस्तृत ॥ धूञ् कम्पने ॥४॥ धुनोति, धुनुते । दुधाव । स्वरतीति वेट् । दुधविथ, दुधोथ ॥ **श्युकः किति ७।२।११ ॥** श्रिञ एकाच उगन्ताच्च गित्कितोरिण् न । परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भ-

---

१ "इडत्यर्तिव्ययतीनाम्" "अञ्जेः सिचि" इत्यतोऽनुवर्त्याह–सिच इडिति ॥ २ "चजोः कुघित्–" "अभ्यासाच्च" "सँल्लिटोर्जेः" इत्येभ्योऽनुवर्त्याह–अभ्यासादिति ॥ ३ "हलादि शेषः" इत्यस्यापवादोयमित्याह–अभ्यासस्येति ॥ ४ "इट् सनि वा" "लिङ्सिचोरात्मनेपदेषु" इत्यतोऽनुवर्त्याह–लिङ्सिचोरिति ॥ ५ "नेड्वशिकृति" एकाच उपदेशे–" इत्यतोऽनुवर्त्याह–एकाच इति ॥

सामर्थ्यादनेन निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । दुधुविव । दुधुवे अधावीत्, अधविष्ट, अधोष्ट । अधविष्यत्, अधोष्यत् । अधविष्यताम्, अधोष्यताम् । अधविष्यत, अधोष्यत ॥

॥ इति स्वादयः ॥ ५ ॥

## अथ तुदादयः ।

तुद व्यथने ॥ १ ॥ **तुदादिभ्यः शः ३।१।७७ ॥** शपोपवादः । तुदति, तुदते । तुतोद । तुतोदिथ । तुतुदे । तोत्ता । अतौत्सीत्, अतुत्त ॥ णुद प्रेरणे ॥ २ ॥ नुदति, नुदते । नुनोद । नोत्ता । भ्रस्ज पाके ॥ ३ ॥ ग्रहिज्येति सम्प्रसारणम् । सस्य श्चुत्वेन शः । शस्य जश्त्वेन जः । भृज्जते ॥ **भ्रस्जो रोपधयोरमन्यतरस्याम् ६।४।४७ ॥** भ्रस्जे रेफस्योपधायाश्च स्थाने रमागमो वा स्यादार्धधातुके । मित्त्वादन्त्यादचः परः । स्थानषष्ठीनिर्देशाद्रोपधयोर्निवृत्तिः । बभर्ज । बभर्जतुः । बभर्जिथ, बभर्ष्ठ । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जिथ । स्कोरिति सलोपः । व्रश्चेति षः । बभ्रष्ठ । बभर्जे, बभ्रज्जे । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । ( क्ङिति रमागमं बाधित्वा सम्प्र-

---

१ "कर्तरि शप्" "सार्वधातुके यक्" इत्यतोऽनुवृत्तेः फलमाह–शपोपेति॥
२ परमपि लघूपधगुणं बाधित्वा नित्यत्वात् शे प्रत्यये तस्य ङित्वात् लघूपधगुणो नेति भावः ॥ ३ "आर्धधातुके" इत्यधिकृत्याह–आर्धेति ॥

सारण पूर्वविप्रतिषेधेन )। भृज्ज्यात् । भृज्ज्यास्ताम् । भृज्ज्यासुः । भर्क्षीष्ट, भ्रक्षीष्ट । अभार्क्षीत्, अभ्राक्षीत् । अभर्ष्ट अभ्रष्ट ॥ कृष विलेखने ॥ ४ ॥ कृषति, कृषते । चकर्ष, चकृषे ॥ **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ६।१।५९ ॥** उपदेशेऽनुदात्तो य ऋदुपधस्तस्याम्वा स्याज्झलादावकिति । क्रष्टा, कर्ष्टा । कृक्षीष्ट । (स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः ) । अक्राक्षीत्, अकार्क्षीत्, अकृक्षत् । अकृष्ट । अकृक्षाताम् । अकृक्षत । अकृक्षन्त ॥ मिल संगमे ॥ ५ ॥ मिलति, मिलते । मिमेल । मेलिता । अमेलीत् ॥ मुच्लृ मोचने ॥ ६ ॥ **शे मुचादीनाम् ७।१।५९ ॥** मुच्लिप्विद्लुप्सिच्कृत्खिद्पिशां नुम् स्यात् । मुञ्चति, मुञ्चते । मोक्ता । मुच्यात् । मुक्षीष्ट । अमुचत्, अमुक्त । अमुक्षाताम् ॥ लुप्लृ छेदने ॥ ७ ॥ लुम्पति, लुम्पते । लोप्ता । अलुपत्, अलुप्त ॥ विद्लृ लाभे ॥ ८ ॥ विन्दति, विन्दते । विवेद, विविदे । व्याघ्रभूतिमते सेट् । वेदिता । भाष्यमतेऽनिट् । परिवेत्ता ॥ षिच क्षरणे ॥ ९ ॥ सिञ्चति, सिञ्चते ॥ **लिपिसिचिह्वश्च ३।१।५३ ॥** एभ्यश्च्लेरङ् स्यात् । असिचत् ॥

---

१ रमागमस्यावकाशः—भ्रष्टा भर्क्ष्यतीति। सम्प्रसारणस्यावकाशः—इज्यात् उच्यात् इति । सम्प्रसारणं भवति पूर्वविप्रतिषेधेनेति भावः ॥ २ " सृजिदृशोर्झल्यम्—" इत्यतोऽनुवर्त्याह—अम्वेति ॥ ३ " इदितो नुम्—" इत्यतोनुवर्त्याह—नुमिति ॥ १ " च्लेः सिच् " " अस्यतिवक्तिख्यातिभ्यः—" इत्यतोऽनुवर्त्याह—च्लेरित्यादि ॥

**आत्मनेपदेष्वन्यतरस्याम् ३।१।५४ ॥** लिपिसिचिह्वः परस्य च्लेरङ् वा। असिचत्, असिक्त ॥ लिप उपदेहे ॥ १० ॥ उपदेहो वृद्धिः। लिम्पति, लिम्पते। लेप्ता। अलिपत्, अलिपत, अलिप्त ॥

॥ इत्युभयपदिनः ॥

कृती छेदने ॥ ११ ॥ कृन्तति। चकर्त। कर्तिता। कर्तिष्यति, कर्त्स्यति। अकर्तीत् ॥ खिद परिघाते ॥ १२ ॥ खिन्दति। चिखेद। खेत्ता ॥ पिश अवयवे ॥ १३ ॥ पिंशति। पेशिता ॥ ओव्रश्चू छेदने ॥ १४ ॥ वृश्चति। वव्रश्च। वव्रश्चिथ, वव्रष्ठ। व्रश्चिता, व्रष्टा। व्रश्चिष्यति, व्रक्ष्यति। वृश्च्यात्। अव्रश्चीत्, अव्राक्षीत् ॥ व्यच व्याजीकरणे ॥ १५ ॥ विचति। विव्याच। विविचतुः। व्यचिता। व्यचिष्यति। विच्यात्। अव्यचीत्, अव्याचीत्। व्यचेः कुटादित्वमनसीति तु नेह प्रवर्तते, अनसीति पर्युदासेन कृन्मात्रविषयत्वात् ॥ उछि उञ्छे ॥ १६ ॥ उञ्छति। 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्।' इति यादवः॥ ऋच्छ गतीन्द्रियप्रलयमूर्तिभावेषु ॥ १७॥ ऋच्छति। ऋच्छत्यृतामिति गुणः। द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुट्। आनर्च्छ। आनर्च्छतुः। ऋच्छिता ॥ उज्झ उत्सर्गे ॥ १८ ॥ उज्झति ॥ लुभ विमोहने ॥ १९ ॥ लुभति ॥ **तीषसहलुभरुष-**

---

१ 'च्लेः' 'अङ्' "लिपिसिचिह्वः-" इत्यनुवर्त्याह-लिपिसिचीति ॥

२ व्याजीकरणं छद्मकरणम्। ३ विमोहनमाकुलीकरणम्।

रिषः ७।२।४८ ॥ इच्छत्यादेः परस्य तादेरार्धधातुकस्येड्वा स्यात् । लोभिता, लोब्धा । लोभिष्यति ॥ तृप तृम्फ तृप्तौ ॥ २० ॥ २१ ॥ तृपति । ततर्प । तर्पिता । अतर्पीत् । तृम्फति । ( शे तृम्फादीनां नुम् वाच्यः ) । आदिशब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः । ततृम्फ । तृफ्यात् । मृड पृड सुखने ॥ २२ ॥ २३ ॥ मृडति । पृडति ॥ शुन गतौ ॥ २४ ॥ शुनति ॥ इषु इच्छायाम् ॥ २५ ॥ इच्छति । एषिता, एष्टा । एषिष्यति । इष्यात् । ऐषीत् ॥ कुट कौटिल्ये ॥ २६ ॥ गाङ्कुटादीति ङित्त्वम् । चुकुटिथ । चुकोट । चुकुट । कुटिता ॥ पुट सश्लेषणे ॥ २७ ॥ पुटति । पुटिता ॥ स्फुट विकसने ॥ २८ ॥ स्फुटति । स्फुटिता ॥ स्फुर स्फुल सचलने ॥ २९ ॥ ॥ ३० ॥ स्फुरति । स्फुलति ॥ **स्फुरतिस्फुलत्योर्निर्निविभ्यः ८।३।७६** ॥ षत्वं वा स्यात् । निःष्फुरति, निःस्फुरति ॥ णू स्तवने ॥ ३१ ॥ परिणूतगुणोदयः । नुवति । नुनाव । नुविता ॥ टुमस्जो शुद्धौ ॥ ३२ ॥ मज्जति । ममज्ज । ममज्जिथ । मस्जिनशोरिति नुम् । ( मस्जेरन्त्यात्पूर्वो नुम्वाच्यः ) । संयोगादिलोपः । ममङ्क्थ । मङ्क्ता । मङ्क्ष्यति । अमाङ्क्षीत् । अमाङ्क्ताम् । अमाङ्क्षुः ॥ रुजो भङ्गे ॥ ३३ ॥ रुजति । रोक्ता । रोक्ष्यति । अरौक्षीत् ॥ भुजो कौटिल्ये ॥ ३४ ॥ रुजिवत् ॥ विश प्रवेशने ॥ ३५ ॥ विशति ॥ मृश आमर्शने ॥ ३६ ॥

---

१ "स्वरतिसूति-" इत्यतोऽनुवर्त्याह-तादेरार्धेति ॥ २ "अपदान्तस्य मूर्धन्यः" "सिवादीनां वा-" इत्यतोऽनुवर्त्याह-षत्वं वेति ॥

आमर्शन स्पर्शे ॥ अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् ॥ अम्राक्षीत्, अमार्क्षीत्, अमृक्षत् ॥ षद्लृ विशरणगत्यवसादनेषु ॥ ३७ ॥ सीदती-त्यादि । शद्लृ शातने ॥ ३८ ॥ **शदेः शितः १।३।६०॥** शिद्भा-विनोऽस्मात्तङानौ स्तः । शीयते। शीयताम् । अशीयत । शीयेत । शशाद । शत्ता । शत्स्यति । अशदत् । अशत्स्यत्॥ कॄ विक्षेपे ॥ ३९ ॥ **ॠत इद्धातोः ७।१।१०० ॥** ॠदन्तस्य धातोरङ्गस्य इत्स्यात् । किरति । चकार । चकरतुः । चकरुः । करीता, करिता । कीर्यात् ॥ **किरतौ लवने ६।१।१४० ॥** उपात्किरतेः सुट् छेदने । उपस्किरति । ( अडभ्यासव्यवायेऽपि सुट् कात् पूर्व इति वक्तव्यम् ) । उपास्किरत् । उपचस्कार ॥ **हिंसायां प्रतेश्च ६।१।१४१ ॥** उपात्प्रतेश्च किरतेः सुट् स्यात् हिंसायाम् । उपस्किरति । प्रतिस्किरति ॥ गॄ निगरणे ॥ ४० ॥ **अचि विभाषा ८।२।२१ ॥** गिरते रेफस्य लो वाजादौ प्रत्यये । गिरति, गिलति । जगार, जगाल । जगरिथ, जगलिथ । गरीता, गरिता; गलीता, गलिता ॥ प्रच्छ ज्ञीप्सायाम् ॥४१॥

---

१ "अनुदात्तङित-" इत्यतोऽनुवर्त्याह-तङानाविति ॥ २ ' इत्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेन ' इत्याश्रित्याह-**चकारेति** ॥ ३ " सुट् कात् पूर्वः " " उपात् प्रतियत्न-" इत्यतोऽनुवर्त्याह-**उपादिति** ॥ ४ " सुट् कात्पूर्वः " इति सूत्रे ' अडभ्यासव्यवायेपि ' इति वार्तिकं कर्तव्यमित्यर्थ. ॥ ५ " सुट् कात्-" " उपात् प्रतियत्न-" " किरतौ लवने " इत्यतोऽनुवर्त्याह-**उपादिति** ॥ ६ " कृपो रो ल. " " ओ यङि " इत्यतोऽनुवर्त्याह-**गिरतेरित्यादि** ।

प्रहिज्येति सम्प्रसारणम् । पृच्छति । पप्रच्छ । पप्रच्छतुः । पप्रच्छुः । प्रष्टा । प्रक्ष्यति । अप्राक्षीत् ॥ मृङ् प्राणत्यागे ॥ ४२ ॥ **म्रियतेर्लुङ्लिङोश्च १।३।६१ ॥** लुङ्लिङोः शितश्च प्रकृतिभूतान्मृङस्तङ् नान्यत्र । रिङ् । इयङ् । म्रियते । ममार । मर्ता । मारिष्यति । मृषीष्ट । अमृत ॥ पृङ् व्यायामे ॥ ४३ ॥ प्रायेणायं व्याङ्पूर्वः । व्याप्रियते । व्यापप्रे । व्यापप्राते । व्यापरिष्यते । व्यापृत । व्यापृषाताम् । जुषी प्रीतिसेवनयोः ॥ ४४ ॥ जुषते । जुजुषे ॥ ओविजी भयचलनयोः ॥ ४५ ॥ प्रायेण उत्पूर्वः । उद्विजते ॥ **विज इट् १।२।६२ ॥** विजेः पर इडादिप्रत्ययो ङिद्वत् । उद्विजिता ॥

॥ इति तुदादय ॥ ६ ॥

## अथ रुधादयः ।

रुधिर् आवरणे ॥ १ ॥ **रुधादिभ्यः श्नम् ३ । १ । ७८ ॥** शपोऽपवादः ॥ रुणद्धि । श्नसोरल्लोपः । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धः । रुन्ध । रुणध्मि । रुन्ध्वः । रुन्ध्मः । रुन्धे । रुन्धाते । रुन्धते । रुन्त्से । रुन्धाथे । रुन्ध्वे । रुन्धे । रुन्ध्वहे । रुन्ध्महे । रुरोध, रुरुधे । रोद्धासि, रोद्धासे । रोत्स्यति, रोत्स्यते । रुणद्धु, रुन्धात् ।

---

१ "अनुदात्तङितः–" "शदेः शितः" इत्यतोऽनुवर्त्याह–शितश्चेति ॥
२ "गाङ्कुटादिभ्यः" इत्यतोऽनुवर्त्याह–ङिद्वदिति ॥ ३ "सार्वधातुके यक्" "कर्तरि शप्" इत्यतोऽनुवृत्तेः फलितमाह–शपोऽपेति ॥

रुन्धाम् । रुन्धन्तु । रुन्धि । रुणधानि । रुणधाव । रुणधाम । रुन्धाम् । रुन्धाताम् । रुन्धताम् । रुन्त्स्व । रुणधै । रुणधावहै । रुणधामहै । अरुणत्, अरुणद् । अरुन्धाम् । अरुन्धन् । अरुणः, अरुणत्, अरुणद् । अरुन्ध । अरुन्धाताम् । अरुन्धत । अरुन्धाः । रुन्ध्यात् । रुन्धीत । रुध्यात्, रुत्सीष्ट । अरुधत्, अरौत्सीत् । अरुद्ध । अरुत्साताम् । अरुत्सत । अरोत्स्यत्, अरोत्स्यत ॥ भिदिर् विदारणे ॥ २ ॥ छिदिर् द्वैधीकरणे ॥ ३ ॥ युजिर् योगे ॥ ४ ॥ रिचिर् विरेचने ॥ ५ ॥ रिणक्ति, रिङ्क्ते । रिरेच । रेक्ता । रेक्ष्यति । अरिणक् । अरिचत्, अरैक्षीत्, अरिक्त ॥ विचिर् पृथग्भावे ॥ ६ ॥ विनक्ति, विङ्क्ते ॥ क्षुदिर् संपेषणे ॥ ७ ॥ क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत्, अक्षौत्सीत्, अक्षुत्त । उच्छृदिर् दीप्तिदेवनयोः ॥ ८ ॥ छृणत्ति, छृन्ते । चच्छर्द । से सिचीति वेट् । चच्छृदिषे, चच्छृत्से । छर्दिता । छर्दिष्यति, छर्त्स्यति । अच्छृदत्, अच्छर्दिष्ट ॥ उतृदिर् हिंसानादरयोः ॥ ९ ॥ तृणत्ति, तृन्ते ॥ कृती वेष्टने ॥ १० ॥ कृणत्ति ॥ तृह हिंसि हिंसायाम् ॥ ११ ॥ १२ ॥ **तृणह इम् । ७ । ३ । ९२ ॥** तृहः श्नमि कृते इमागमो हलादौ पिति सार्वधातुके । तृणेढि । तृण्ढः । ततर्ह । तर्हिता । अतृणेट् ॥ **श्नान्नलोपः ६ । ४ । २३ ॥** श्नमः परस्य नस्य लोपः स्यात् । हिनस्ति । जिहिंस । हिंसिता । **तिप्यनस्तेः ८ । २ । ७३ ॥** पदान्तस्य

---

१ "नाभ्यस्तस्याचि-" "उतो वृद्धिर्लुकि-" इत्यतोऽनुवर्त्याह-**हलादौ पितीति** ॥ २ "पदस्य" "ससजुषोः-" "वसुस्रंसु-" इत्यतोऽनुवर्त्याह-**पदान्तस्येति** ॥

सस्य दः स्यात्तिपि न त्वस्तेः । ससजुषो रुरित्यस्यापवादः । अहिनत्, अहिनद् । अहिस्ताम् । अहिसन् ॥ **सिपि धातो रुर्वा ॥ ८ । २ । ७४ ॥** पदान्तस्य धातोः सस्य रुः, पक्षे दः ॥ अहिनः, अहिनत्, अहिनद् ॥ उन्दी क्लेदने ॥ १३ ॥ उनत्ति । उन्तः । उन्दन्ति । उन्दाञ्चकार । औनत् । औन्ताम् । औन्दन् । औनः, औनत्, औनद् । औनदम् ॥ अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु ॥ १४ ॥ अनक्ति । अङ्क्तः । अञ्जन्ति । आनञ्ज । आनञ्जिथ, आनङ्क्थ । अञ्जिता, अङ्क्ता । अङ्ग्धि ॥ अनजानि । आनक् ॥ **अञ्जेः सिचि ७ । २ । ७१ ॥** अञ्जेः सिचो नित्यमिट् स्यात् । आञ्जीत् ॥ तञ्चू संकोचने ॥ १५ ॥ तनक्ति । तञ्चिता, तङ्क्ता ॥ ओविजी भयचलनयोः ॥ १६ ॥ विनक्ति । विङ्क्तः । विज इडिति ङित्त्वम् । विविजिथ । विजिता । अविनक् । अविजीत् ॥ शिष्लृ विशेषणे ॥ १७ ॥ शिनष्टि । शिष्टः । शिषन्ति । शिनक्षि । शिशेष । शिशेषिथ । शेष्टा । शेक्ष्यति । हेर्धिः । शिण्ड्ढि । शिनषाणि । अशिनट् । शिष्यात् । शिष्यात् । अशिषत् ॥ एवम् ॥ पिष्लृ संचूर्णने ॥ ॥ १८ ॥ भञ्जो आमर्दने ॥ १९ ॥ श्नान्नलोपः । भनक्ति । बभ-

---

१ "पदस्य" इत्यधिक्रियते । "ससजुषो" इत्यत. 'रुः' इति वर्तते । वा शब्दश्चार्थे समुच्चये । तेन 'वसुस्रंसु–' इत्यतोनुवृत्तो 'द' इति समुच्चीयते त्याह–पदान्तस्येति ॥ २ "इडत्त्यर्तिव्ययतीनाम्" इत्यतोऽनुवर्त्याह–त्यमिडिति ॥

ञ्जिथ, बभङ्क्थ । भङ्क्ता । भङ्ग्धि । अभाङ्क्षीत् ॥ भुज पालनाभ्यवहारयोः ॥ २० ॥ भुनक्ति । भोक्ता । भोक्ष्यति । अभुनक् ॥ **भुजोऽनवने १ । ३ । ६६** ॥ तङानौ स्तः । ओदनं भुङ्क्ते । अनवने किम् । महीं भुनक्ति ॥ ञिइन्धी दीप्तौ ॥ २१ ॥ इन्द्धे । इन्धाते । इन्धते । इन्त्से । इन्ध्वे । इन्धाञ्चक्रे । इन्धिता । इन्धाम् । इन्धाताम् । इनधै । ऐन्ध । ऐन्धाताम् । ऐन्धाः ॥ विद विचारणे ॥ ॥ २२ ॥ विन्ते । वेत्ता ॥

॥ इति रुधादयः ॥ ७ ॥

## अथ तनादयः ।

तनु विस्तारे ॥ १ ॥ **तनादिकृञ्भ्य उः ६ । १ । ७९** ॥ शपोऽपवादः । तनोति, तनुते । ततान, तेने । तनितासि, तनितासे । तनिष्यति, तनिष्यते । तनोतु । तनुताम् । अतनोत्, अतनुत । तनुयात्, तन्वीत । तन्यात्, तनिषीष्ट । अतानीत्, अतनीत् ॥ **तनादिभ्यस्तथासोः २ । ४ । ७९** ॥ तनादेः सिचो वा लुक् स्यात्तथासोः ॥ अतत, अतनिष्ट । अतथाः, अतनिष्ठाः ।

---

१ "अनुदात्तङित.—" इत्यत 'आत्मनेपदम्' इति वर्ततेऽत आह—**तङानाविति** ॥ २ तनादित्वादेव सिद्धे कृञ्ग्रहणम् 'गणकार्यमनित्यम्' इति ज्ञापयतीति केचित् ॥ ३ "सार्वधातुके यक्" "कर्तरि शप्" इत्यतोऽनुवृत्तेः फलमाह—**शपोऽपवाद** इति ॥ ४ "गातिस्थाघुपाभूभ्यः" "ण्यक्षत्रियार्ष—" इत्यतोऽनुवर्त्याह—**सिच** इति ॥

इत्थङ्कारं भुंक्ते । सिद्धेति किम्—शिरोऽन्यथा कृत्वा भुंक्ते ॥ इत्युत्तर कृदन्तम् ॥

॥ इति कृदन्तम् ॥

## अथ विभक्त्यर्थाः

**प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २ । ३ । ४६ ॥** नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे—उच्चैः । नीचैः । कृष्णः । श्रीः । ज्ञानम् । लिङ्गमात्रे—तटः, तटी, तटम् । परिमाणमात्रे—द्रोणो व्रीहिः । वचनं—संख्या । एकः, द्वौ, बहवः ॥ **सम्बोधने च २ ।**

१ नियतोपस्थितिर्यस्य तत् प्रवृत्तिनिमित्तं तदाश्रयश्चेत्येतद्द्वयमित्यर्थः ॥ २ प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं च प्रातिपदिकार्थलिङ्गपरिमाणवचनानि तान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रम् तस्मिन् प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे । अत्र समासस्य द्वन्द्वत्वाद् 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इत्युक्तेरिति भावः ॥ ३ भाष्यमते प्रातिपदिकार्थमात्रस्योदाहरणम्—अलिङ्गाः— उच्चैः नीचैः इत्यादयः । लिङ्गप्रवृत्तिनिमित्ताः—पुमान् स्त्री नपुंसकम् इत्यादयः । लिङ्गमात्राधिक्यस्य—कृष्णः श्रीः ज्ञानम् तटः तटी तटम् इत्यादयः । अत्र जातिव्यक्तिभ्यां प्रातिपदिकार्थाभ्यामधिकस्य लिङ्गस्योपस्थीयमानत्वात् । परिमाणमात्राधिक्यस्य—द्रोणः खारी आढकम् इत्यादयः । अत्र प्रातिपदिकार्थाभ्यां जातिव्यक्तिभ्यां द्रोणत्वतदाश्रयाभ्याम् अधिकस्य परिमाणत्वस्य लिङ्गवद्विशेष्यान्वयिन उपस्थितिविषयत्वात् ४ इति बोध्यम् ॥ इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम् ॥

३ । ४७ ॥ प्रथमा स्यात् । हे राम ॥ ( इति प्रथमा ) ॥ **कर्तुरी-प्सिततमं कर्म १ । ३ । ४९ ॥** कर्तुः क्रियया आप्तुमिष्टतमं कारककर्मसंज्ञं स्यात् ॥ **कर्मणि द्वितीया २ । ३ । २ ॥** अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मादौ प्रथमा—हरिः सेव्यते । लक्ष्म्या सेवितः ॥ **अकथितं च १ । ४ । ५१ ॥** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात् । दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमन्थमुषाम् ॥ कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ १ ॥ गां दोग्धि पयः । बलिं याचते वसुधाम् । तण्डुलानोदनं पचति । गर्गान् शतं दण्डयति । व्रजमवरुणद्धि गाम् । माणवकं पन्थानं पृच्छति । वृक्षमवचिनोति फलानि । माणवकं धर्मं ब्रूते शास्ति वा । शतं जयति देवदत्तम् । सुधां क्षीरनिधिं मथ्नाति । देव-

---

१ "प्रातिपदिकार्थलिङ्ग—" इत्यतोऽनुवर्त्याह—**प्रथमेति** ॥ २ "कारके" इत्यधिकृतम् । कर्तुरीप्सिततमं च स्वनिष्ठक्रियाद्वारेति मनसि निधायाह—**कर्तुः क्रिययेति** ॥ कर्तृत्वविवक्षया प्रयुक्तस्येत्यर्थः । 'माषेष्वश्वं बध्नाति' इत्यत्र माषाणां भक्षणकर्तुरश्वस्येप्सिततमत्वेपि कर्तृत्वविवक्षया प्रयुक्तस्य पुरुषस्येप्सिततमत्वाभावान्न कर्मसंज्ञेति बोध्यम् ॥ ३ "अनभिहिते" इत्यधिकृतम् ॥ अत आह—**अनुक्त इत्यादि** ॥ ४ प्रागुक्तसंज्ञाभिरविवक्षितमिति प्रागुक्तसंज्ञा आह—**अपादानादीति** ॥ "कारके" इत्यधिकृतमिति भाव. ॥ ५ कर्मणा योगश्च धात्वर्थव्यापारात्प्रागेव वर्तमानरूपो बोध्यः ॥ तेन स्थाल्याः कर्मसंज्ञा नेति भावः ब्रुविशासिप्रयोगे तु धात्वर्थव्यापारादुत्तरं संबन्धो बोध्यः ॥

दत्त शतं मुष्णाति । ग्राममजां नयति हरति कर्षति वहति वा । अर्थ-निबन्धनेय सञ्ज्ञा । बलि भिक्षते वसुधाम् । माणवक धर्म भाषते अभि-धत्ते वक्तीत्यादि ॥ ( इति द्वितीया ) ॥ **स्वतन्त्रः कर्ता १ । ४ । ५४ ॥** क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात् ॥ **साधकतमं करणम् १ । ४ । ४२ ॥** क्रियासिद्धौ प्रकृष्टोपका-रकं करणसञ्ज्ञ स्यात् ॥ **कर्तृकरणयोस्तृतीया २।३।१८ ॥** अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण वाणेन हतो वाली ॥ ( इति तृतीया ) ॥ **कर्मणा यमभिप्रैति स सम्प्र-दानम् १।४।३२ ॥** दानस्य कर्मणा यमभिप्रैति स सम्प्रदानसञ्ज्ञः स्यात् ॥ **चतुर्थी सम्प्रदाने २।३।१३ ॥** विप्राय गां ददाति ॥ **नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च २।३।१६ ॥** एभिर्योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा ।

---

१ 'अहमपीदमचोद्यं' 'चोद्ये' 'शकारमसि चोदित.' इति भाष्यप्रयोगात् ॥ भिक्षिशासिग्रहणवैयर्थ्यापत्ति. । तस्मात् अर्थनिबन्धनत्वे सञ्ज्ञाया भाष्योक्तपरिगणने सति प्रामाणिकप्रयोगे व्यापारद्वयार्थत्वमाश्रित्य द्विकर्मत्वं बोध्यमिति भाष्यत-त्त्वविदः ॥ २ "कारके" इत्यधिकृतम् । 'यावद् ब्रूयात्–क्रियायामिति तावद् ब्रूयात् कारक इति' इति भाष्योक्तिमाश्रित्याह–**क्रियासिद्धाविति** ॥ ३ "अन-भिहिते" इत्यधिक्रियते ॥ ४ 'संप्रदानम्' इति 'सम्प्रदीयतेऽस्मै' इति महासंज्ञा-बलाद् अन्वर्थत्वमाश्रित्याह–**दानस्येति** ॥ ५ "अनभिहिते" इत्यधिक्रियते ॥ ६ "चतुर्थी सम्प्रदाने" इत्यत. 'चतुर्थी' इति वर्तते ॥ 'नम.–वषड्भिर्योगो यस्य स तस्मात्' इत्यनेन फलितमाह–**एभिर्योग इति** ॥

पितृभ्यः स्वधा । अलमिति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि ॥ ( इति चतुर्थी ) **ध्रुवमपायेऽपादानम् १।४।२४ ॥** अपायो विश्लेपस्तस्मिन्साध्ये यद् ध्रुवमवधिभूत[1] कारक तदपादान स्यात् ॥ **अपादाने पञ्चमी २।३।२८ ॥** ग्रामादायाति । धावतोऽश्वात्पततीत्यादि ॥ (इति पञ्चमी) **षष्ठी शेषे २।३।५०।**[2] कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सवन्धः शेषस्तत्र षष्ठी । राज्ञः पुरुषः । कर्मादीनामपि संबन्धमात्रविवक्षायां पष्ठयेव । सतां गतम् । सर्पिषो जानीते । मातुः स्मरति । एधोदकस्योपस्कुरुते[3] । भजे शम्भोश्चरणयोः ॥ ( इति षष्ठी) **आधारोऽधिकरणम् १।४।४५ ॥** कर्तृकर्मद्वारा[4] तन्निष्ठक्रियाया आधारः कारकमधिकरण स्यात् ॥ **सप्तम्यधिकरणे च २।३।३६ ॥**[5] अधिकरणे सप्तमी स्यात् चकाराद्दूरान्तिकार्थेभ्यः[6] । औपश्लेषिको वैषयिकोऽभिव्यापक-

---

१ अवधिभूतत्वेन विवक्षितमित्यर्थं । विवक्षा च सतोऽपि न भवति यथा–अनुदरा कन्या, असतोऽपि विवक्षा यथा–वन्ध्यापुत्रः । एव चलेऽप्यश्वेऽवधित्वविवक्षयाऽपादानत्व भवत्येवेति भाव ॥ २ " अनभिहिते " इत्यधिक्रियते ॥ ३ उदकशब्दपर्यायोदकशब्दोऽस्ति ॥ ४ 'कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम् । उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरण स्मृतम् ॥ ' इत्युक्तिमभिप्रेत्य व्याचष्टे–**कर्तृकर्मेति** ॥ ५ " अनभिहिते " इत्यधिक्रियते ॥ " दूरान्तिकार्थेभ्यो द्वितीया च " इत्यप्यनुकृष्यते चकारेणेत्याभिप्रेत्याह–**दूरान्तिकेति** ॥

श्चेत्याधारस्त्रिधा । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छाऽस्ति । सर्वस्मिन्नात्मास्ति । वनस्य दूरे अन्तिके वा ॥ ( इति सप्तमी ) ॥

॥ इति विभक्त्यर्थाः ॥

## अथ समासः ।

तत्रादौ केवलसमासः । समासः पञ्चधा । तत्र समसनं समासः । स च विशेषसंज्ञाविनिर्मुक्तः केवलसमासः प्रथमः ॥ १ ॥ प्रायेण पूर्व-पदार्थप्रधानोऽव्ययीभावो द्वितीयः ॥ २ ॥ प्रायेणोत्तरपदार्थप्रधान-स्तत्पुरुषस्तृतीयः ॥ तत्पुरुषभेदः कर्मधारयः । कर्मधारयभेदो द्विगुः ॥ ३ ॥ प्रायेणान्यपदार्थप्रधानो बहुव्रीहिश्चतुर्थः ॥ ४ ॥ प्रायेणोभय-पदार्थप्रधानो द्वन्द्वः पञ्चमः ॥ ५ ॥ **समर्थः पदविधिः २ ।**

---

१ आसनक्रियाकर्तृद्वारा आसनक्रियाया आधारः कट अधिकरणसंज्ञ. ॥ २ पाकक्रियाकर्मतण्डुलादिद्वारा पाकक्रियाया आधार. स्थाली अधिकरणसंज्ञः ॥ ३ अस्तिक्रियाकर्तृभूतेच्छाद्वारा अस्तिक्रियाया आधारो मोक्षोऽधिकरणसंज्ञः ॥ ४ अस्तिक्रियाकर्तृभूतात्मद्वारा आस्तिक्रियाया आधारः सर्वमधिकरणसज्ञम् ॥ ५ पृथक्पृथगर्थोपस्थापकत्वेन दृष्टानां पदानामेकार्थोपस्थितिजनकत्वमेकार्थी-भावरूप समसनमेव समास इत्यर्थ. ॥ ६ विशेषसज्ञा अव्ययीभावादिरूपास्ता भिर्विनिर्मुक्त इत्यर्थ. ॥ ७ सूपप्रति उन्मत्तगङ्गमित्यादावव्ययीभावेऽपि पूर्वपदार्थ-प्राधान्याभावात्, उक्तम्-प्रायेणेति ॥ ८ अतिमालादौ तत्पुरुषेऽप्युत्तरपदार्थ-प्राधान्याभावाद् उक्तम्-प्रायेणेति ॥ ९ द्वित्रा इत्यादौ बहुव्रीहित्वेऽप्य-न्यपदार्थप्राधान्याभावाद् उक्तम्-प्रायेणेति ॥ १० पाणिपादमित्यादौ द्वन्द्वेऽ-प्युभयपदार्थप्राधान्याभावाद् उक्तम् प्रायेणेति ॥

१।१ ॥ पदसंवन्धी यो विधिः स समर्थाश्रितो बोध्यः ॥ **प्राक्कडारात्समासः २।१।३** ॥ कडाराः कर्मधारय इत्यतः प्राक् समास इत्यधिक्रियते ॥ **सह सुपा २।१।४** ॥ सुप् सुपा सह वा समस्यते । समासत्वात्प्रातिपदिकत्वेन सुपो लुक् । परार्थाभिधानं वृत्तिः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः । वृत्त्यर्थावबोधक वाक्यं विग्रहः । स च लौकिकोऽलौकिकश्चेति द्विधा । तत्र पूर्वं भूत इति लौकिकः । पूर्व अम् भूत सु इत्यलौकिकः । भूतपूर्वः । भूतपूर्वे चरडिति निर्देशात्पूर्वनिपातः । ( वा ) इवेन समासो विभक्त्यलोपश्च । वागर्थौ इव वागर्थाविव ॥

॥ इति केवलसमासः ॥ १ ॥

---

## अथाव्ययीभावः ॥ २ ॥

**अव्ययीभावः २।१।५** ॥ अधिकारोय प्राक् तत्पुरुषात् ॥ **अव्ययं विभक्तिसमीपसमृद्धिवृद्धयर्थाभावात्ययासं-**

---

१ "समासः" "इत्यधिक्रियमाणे" सुयामंत्रिते–" इत्यतोऽनुवर्तमानेन सुपपदेन सामानाधिकरण्याय व्याख्यायते–समस्यते इति ॥ अव्ययमित्यादिना समासविधानादस्य वैकल्पिकत्वमेव । अत एव भाष्यकृता 'विस्पष्टं पटुः विस्पष्टपटुरिति विग्रहः प्रदर्शितः ॥ अविग्रहस्यैव नित्यसमासत्वमिति बोध्यम् ॥ २ परस्य एकार्थस्याभिधानम् एकार्थाभावेनोपस्थितिजननमेव वृत्तिरित्यर्थः ॥ ३ वृत्तेर्योऽर्थः तस्यावबोधकं वाक्य विग्रह इत्यर्थः ॥ ४ लोके प्रयोगार्हं एव लौकिकः ॥ ५ लोके प्रयोगानर्हं एवमलौकिक. ॥

**प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २ । १ । ६ ॥** विभक्त्यर्थादिषु वर्तमानमव्ययं सुबन्तेन[1] सह नित्यं समस्यते सोऽव्ययीभावः ॥ प्रायेणाविग्रहो नित्यसमासः प्रायेणास्वपदविग्रहो वा । विभक्तौ हरिङि अधि इति स्थिते—॥**प्रथमानिर्दिष्टं समास उपसर्जनम् १।२।४३॥** समासशास्त्रे[2] प्रथमानिर्दिष्टमुपसर्जनसज्ञं स्यात् ॥ **उपसर्जनं पूर्वम् २।२।३०॥** समासे[3] उपसर्जन प्राक्प्रयोज्यम् । इत्यधेः प्राक् प्रयोगः । सुपो लुक् । एकदेशविकृतस्यानन्यत्वात्[4]प्रातिपदिकसंज्ञाया स्वाद्युत्पत्तिः। अव्ययीभावश्चेत्यव्ययत्वात्सुपो लुक् । अधिहरि ॥ **अव्ययीभावश्च २।४।१८॥** अयं नपुंसकं[5] स्यात् । **नाव्ययीभावादतोऽम्त्वपञ्चम्याः २। ४ । ८३ ॥** अदन्तादव्ययीभावात्सुपो[6] न लुक् तस्य

---

१ 'समास.' 'अव्ययीभावः' इत्यधिक्रियते "सह सुपा" इत्यतोऽनुवर्त्याह—**सुबन्तेनेत्यादि** ॥ २ समासपद लक्षणया समासविधायकशास्त्रपरमित्याह—**समासशास्त्र इति** ॥ ३ "प्राक्कडारात्—" इति समासाधिकारावधे. प्रतिज्ञातत्वादाह—**समास इति** ॥ ४ यथा कुक्कुरस्य पुच्छे कर्तिते कर्णयोर्वा कर्तितयोः 'कुक्कुर' इति नाम्नो न निवृत्ति. एव सुब्विशिष्टस्य प्रातिपदिकसज्ञायां सुपो लुक्यपि न प्रातिपदिकत्वनिवृत्तिरिति भावः ॥ ५ "स नपुंसकम्" इत्यतोऽनुवर्त्याह—**नपुंसकमिति** ॥ ६ "अव्ययादाप्सुपः" इत्यस्यानुवृत्त्या तस्यापवाद इत्याह—**सुपो नेति** ॥

ञ्ञभीं विना अमादेशश्च स्यात् । गाः पातीति गोपास्तस्मिन्नित्यधिगोप॑म् । **तृतीयासप्तम्योर्बहुलम् २।४।८४॥** अदन्तादव्ययीभावात्तृतीयासप्तम्योर्बहुलमम्भावः स्यात् । अधिगोपम्, अधिगोपेन, अधिगोपे वा ॥ कृष्णस्य समीपम् उपकृष्णम् ॥ मद्राणां समृद्धिः सुमद्रम् ॥ यवनानां व्यृद्धिर्दुर्यवनम् । मक्षिकाणामभावो निर्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा संप्रति न युज्यत इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । रूपस्य योग्यमनुरूपम् । अर्थमर्थं प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य यथाशक्ति ॥ **अव्ययीभावे चाकाले ६।३।८१ ॥** सहस्य सः स्यादव्ययीभावे न तु काले । हरेः सादृश्यं सहरि । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेण युगपत् सचक्रम् । सदृशः सख्या ससखि । क्षत्राणां संपत्तिः सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्यन्तमधीते साग्नि ॥ **नदीभिश्च**

---

१ स्त्रीप्रत्ययान्तोत्तरपदाव्ययीभावे स्त्रीप्रत्ययान्तस्योपसर्जनत्वेन " गोस्त्रियोरुपसर्जनस्य" इत्यनेनैव ह्रस्वसिद्धौ नपुंसकसंज्ञायाः प्रयोजनमस्त्रीप्रत्ययान्तोपसर्जनस्य ह्रस्वसाधनमेवेति भावमाश्रित्यास्त्रीप्रत्ययान्तत्वमुत्तरपदस्य दर्शयति–गाः पातीति ॥ २ " अव्ययादाप्सुपः " " नाव्ययीभावादतोऽम्त्वपञ्चम्याः " इत्यनुवर्त्याह–अदन्तादव्ययीभावादिति ॥ ३ ऋद्धेराधिक्यं समृद्धिः ॥ ४ विगता ऋद्धिर्व्यृद्धिः ॥ ५ " सहस्य सः संज्ञायाम् " इत्यतोऽनुवर्त्याह–सहस्येति ॥ ६ अनुरूपमात्मभावः संपत्तिः ॥

२।१।२० ॥ नदीभिः सह संख्या[1] समस्यते । ( समाहारे चायमिष्यते ) । पञ्चगङ्गम् । द्वियमुनम् ॥ **तद्धिताः ४।१।७६ ॥** आपञ्चमसमाप्तेरधिकारोऽयम् ॥ **अव्ययीभावे शरत्प्रभृतिभ्यः ५।४।१०७ ॥** शरदादिभ्यष्टच्[2] स्यात्समासान्तोऽव्ययीभावे । शरदः समीपमुपशरदम् । प्रतिविपाशम् । ( जराया जरश्च ) । उपजरसमित्यादि ॥ **अनश्च ५।४।१०८ ॥** अन्नन्ताद[3]व्ययीभावाट्टच् स्यात् ॥ **नस्तद्धिते ६।४।१४४ ॥** नान्तस्य[4] भस्य टेर्लोपस्तद्धिते । उपराजम् । अध्यात्मम् ॥ **नपुंसकादन्यतरस्याम् ५।४।१०९ ॥** अन्नन्तं यत्[5] क्लीबं तदन्तादव्ययीभावाट्टज्वा स्यात् । उपचर्मम् । उपचर्म ॥ **झयः ५।४।११२ ॥** झयन्ताद[6]व्ययीभावाट्टच् स्यात् । उपसमिधम् । उपसमित् ॥

॥ इत्यव्ययीभावः ॥ २ ॥

---

१ "संख्या वंश्येन" "प्राक्कडारात्" इत्यतोऽनुवर्त्याह—संख्येति ॥ २ "समासान्ताः" इत्यधिक्रियते । "राजाहःसखिभ्यः–" इत्यतोऽनुवर्त्याह—टजिति ॥ ३ "राजाहःसखिभ्यः–" "अव्ययीभावे शरत्–" इत्यनुवर्त्य विशेषणे तदन्तविधिरित्यभिप्रेत्याह—अन्नन्तादिति ॥ ४ "अङ्गस्य" "भस्य" इत्यधिकृते । "अल्लोपोऽनः" "टेः" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिरित्यभिप्रेत्याह—नान्तस्येति ॥ ५ "समासान्ताः" "राजाहःसखिभ्यः–" "अव्ययीभावे शरत्–" "अनश्च" इत्येतेभ्योनुवर्त्याह—अन्नन्तं यदिति ॥ ६ "समासान्ताः" 'टच्' "अव्ययीभावे" इति "नपुंसकादन्यतरस्याम्" इत्यतो 'अन्यतरस्याम्' इत्यनुवर्त्याह—झयन्तादिति ॥

## अथ तत्पुरुषः।

**तत्पुरुषः २।१।२२॥** अधिकारोऽय प्राग्बहुव्रीहेः॥ **द्विगुश्च २।१।२३॥** द्विगुरपि तत्पुरुषसञ्ज्ञकः स्यात्॥ **द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २। १। २४॥** द्वितीयान्त श्रितादिप्रकृतिकैः सुबन्तैः सह वा समस्यते स च तत्पुरुषः। कृष्ण श्रितः कृष्णश्रित इत्यादि॥ **तृतीया तत्कृतार्थेन गुणवचनेन २।१।३०॥** तृतीयान्त तृतीयान्तार्थकृतगुणवचनेनार्थेन च सह वा प्राग्वत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। धान्येनार्थो धान्यार्थः। तत्कृतेति किम्—अक्ष्णा काणः॥ **कर्तृकरणे कृता बहुलम् २।१।३२॥** कर्तरि करणे च तृतीया कृदन्तेन

---

१ "प्राक्कडारात्" "सह सुपा" "तत्पुरुष." इत्यतोऽनुवर्त्य "विभाषा" अधिकृत्य द्वितीयासुपः केवलस्य प्रयोगाभावात्तदन्तविधिः श्रितादीनां स्वत. सुप्त्वाभावादौचित्याच्छ्रितादिशब्दाना श्रितादिप्रकृतिके लक्षणामाश्रित्य व्याचष्टे–**द्वितीयान्तमित्यादि**॥ २ "प्राक्कडारात्" "सह सुपा" "विभाषा" तत्पुरुष." इत्यतोऽनुवर्त्य तृतीयाया. प्रत्ययत्वेन 'प्रत्ययग्रहणे तदन्तग्रहणम्' 'तत्कृत' इत्यस्य लुप्ततृतीयाकस्य गुणवचनविशेषणमाश्रित्य 'तत्कृत' पदान्तर्गततत्पदेन सन्निहिततृतीयान्तपरामर्शादौचित्येन तस्य तदर्थपरत्वमाश्रित्य व्याचष्टे–**तृतीयान्तार्थेति**॥ ३ "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुष" "तृतीया–" इत्येतेभ्योऽनुर्त्य योग्यतावशात् 'तृतीया' पदं कर्तृकरणपदेनान्वित्य व्याचष्टे–**कर्तरीति**॥

बहुलं प्राग्वत् । हरिणा त्रातो हरित्रातः । नखैर्भिन्नो नखभिन्नः । कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणम् । नखनिर्भिन्नः॥ **चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २।१।३६** ॥ चतुर्थ्यन्तार्थाय यत तद्वाचिना अर्थादिभिश्च चतुर्थ्यन्तं वा प्राग्वत् । यूपाय दारु यूपदारु । ( तदर्थेन प्रकृतिविकृतिभाव एवेष्टः ) तेनेह न—रन्धनाय स्थाली । (वा)अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्॥ द्विजार्थः सूपः। द्विजार्था यवागूः । द्विजार्थं पयः । भूतबलिः । गोहितम् । गोसुखम् । गोरक्षितम् ॥ **पञ्चमी भयेन २।१।३७**॥ चोराद्भयं चोरभयम् ॥ **स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २।१।३८ ॥ पञ्चम्याः स्तोकादिभ्यः ६।३।२** ॥ अलुगुत्तरपदे । स्तोकान्मुक्तः । अन्तिकादागतः । अभ्याशादागतः । दूरादागतः । कृच्छ्रा-

---

१ "गतिरनन्तर·" इति सूत्रेऽनन्तरग्रहणमत्र ज्ञापकमिति बोध्यम् ॥ २ "सुवामन्त्रिते—" "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुष." इत्यतोऽनुवर्त्य तदर्थशब्दं व्याख्याय सूत्रं व्याचष्टे—चतुर्थ्यन्तार्थाय यदिति ॥ ३ "बलिरक्षितग्रहणाज्ज्ञापकात् ॥ अश्वघासादयस्तु षष्ठीतत्पुरुष एवेति भाव·॥ ४ "परवल्लिङ्गं द्वन्द्वतत्पुरुषयो" इत्यनेन प्राप्तस्य पुंस्त्वस्यापवादन विधीयत इति बोध्यम् ·॥ ५ "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुष" इत्यतोऽनुवर्तनीयमिति भाव. ॥ ६ "पञ्चमी भयेन" "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुष." इत्यतोऽनुवर्तनीयमिति भाव. ॥ ७ "अलुगुत्तरपदे" इत्यधिकार ॥

दागतः ॥ **षष्ठी २।२।८ ॥** सुबन्तेन प्राग्वत् । राजपुरुषः ॥ **पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २।२।१ ॥** अव-यविना सह पूर्वादयः समस्यन्ते एकत्वसंख्याविशिष्टश्चेदवयवी । षष्ठी-समासापवादः । पूर्वं कायस्य पूर्वकायः । अपरकायः । एकाधिकरणे किम्—पूर्वश्छात्राणाम् ॥ **अर्धं नपुंसकम् २।२।२ ॥** समांशवाच्य-र्धशब्दो नित्यं क्लीबे, स प्राग्वत् । अर्धं पिप्पल्याः अर्धपिप्पली ॥ **सप्तमी शौण्डैः २।१।४० ॥** सप्तम्यन्तं शौण्डादिभिः प्राग्वत् । अक्षेषु शौण्डः अक्षशौण्ड इत्यादि । द्वितीयातृतीयेत्यादियोगविभागा-दन्यत्रापि तृतीयादिविभक्तीनां प्रयोगवशात्समासो ज्ञेयः ॥ **दिक्सं-ख्ये संज्ञायाम् २।१।५० ॥** संज्ञायामेवेति नियमार्थं सूत्रम् ।

---

१ "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुषः" इत्यतोऽनुवर्त्याह—**सुबन्तेनेति** ॥ २ "सुबामन्त्रिते—" "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुषः" इत्यतोऽनुवर्त्याह—**अवयविनेति** ॥ एकदेशशब्दोऽत्रा-वयववाचीति भावः ॥ ३ अवयवावयविनोः प्रयोगेऽवयविनः षष्ठ्या आवश्यक-त्वेन षष्ठीतत्पुरुषेऽवश्यं प्राप्तेऽयमेकदेशिसमास आरभ्यमाणः षष्ठीतत्पुरुषस्याप-वादः । अत एवावयविनः परप्रयोगः सिध्यति । अवयववाचिपूर्वादिशब्दानां "पूर्वापराधरोत्तरम्—" इति प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात्प्राक्प्रयोगस्येष्टत्वात् ॥ ४ "नपुंसकम्" इति विशेषणोपादानफलमाह—**समांशेति** ॥ "सुबाम-न्त्रिते—" इत्यादिभ्योऽनुवर्त्याह—**स प्राग्वदिति** ॥ ५ "प्राक्कडारात्" "सह सुपा" "विभाषा" "तत्पुरुषः" इत्यतोऽनुवर्त्याह—**सप्तम्यन्तमिति** ॥ ६ "सह सुपा" इत्यनेन केवलसमासविधानादिति तु तत्त्वम् ॥ ७ "विशेषणं विशे-ष्येण—" इति सिद्धे पुनर्विधानफलमाह—**संज्ञायामेवेतीति** ॥

पूर्वेषुकामशमी । सप्तर्षयः । तेनेह न—उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥ **तद्धितार्थोत्तरपदसमाहारे च २।१।५१ ॥** तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये प्राग्वत् । पूर्वस्यां शालायां भवः पूर्वाशाला इति समासे जाते (भा) सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ॥ **दिक्पूर्वपदादसंज्ञायां ञः ४।२।१०७ ॥** अस्माद्भवाद्यर्थे ञः स्यादसंज्ञायाम् ॥ **तद्धितेष्वचामादेः ७।२।११७ ॥** ञिति णिति च तद्धितेष्वचामादेरचो वृद्धिः स्यात् । यस्येति च । पौर्वशालः ॥ पञ्च गावो धनं यस्येति त्रिपदे बहुव्रीहौ । (वा)द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् ॥ **गोरतद्धितलुकि ५।४।९२ ॥** गोर्न्तात्तत्पुरुषाट्टच् स्यात् समासान्तो न तु तद्धितलुकि । पञ्चगवधनः ॥ **तत्पुरुषः समानाधिकरणः कर्म-**

---

१ इषुकामशमी ग्रामविशेषः।पूर्वेषुकामशमी संज्ञा ॥ २ संज्ञायामेवेति नियमेन ॥ ३ "प्राक्कडारात्" "सुबामन्त्रिते" "सह सुपा" "विभाषा" "तत्पुरुष" इत्यतोऽनुवर्त्य एकामपि सप्तमीं विषयभेदेन भित्त्वा व्याचष्टे—**तद्धितार्थे विषय इति। दिक्संख्य इति॥** दिक्संख्याप्रकृतिके सुबन्ते सुबन्तेन समस्येते इत्यर्थ.॥ ४**भव इति।**"तत्र भवः"इति तद्धितप्रकरणे 'भवः' इत्यर्थनिर्देशात् ॥५ पुंलिङ्गे यादृशं रूपं तत्प्राप्ति । अर्थात् स्त्रीप्रत्ययनिवृत्तिः । तन्निमित्तस्य स्त्रीत्वस्य निवृत्तेरिति भावः ॥ ६ "मृजेर्वृद्धिः" "अचो ञ्णिति" इत्यतोऽनुवर्त्याह—**ञिति णिति चेति** ॥ ७ "तद्धितार्थस्योदाहरणं दर्शयित्वोत्तरपदस्योदाहरणमाह—**पञ्च गावो धनं यस्येति** ॥८ "समासान्ताः" "तत्पुरुषस्याङ्गुले" "राजाहःसखिभ्यष्टच्" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं कृत्वाह—**गोन्तादिति ॥**

**धारयः १।२।४२ ॥ संख्यापूर्वो द्विगुः २ । १ । ५२ ॥** तद्धितार्थेत्यत्रोक्तस्त्रिविधः सङ्ख्यापूर्वो द्विगुसज्ञः स्यात् ॥ **द्विगुरेकवचनम् २ । ४ । १ ॥** द्विग्वर्थः समाहार एकवत्स्यात् ॥ **स नपुंसकम् २।४।१७ ॥** समाहारे द्विगुर्द्वन्द्वश्च नपुसक स्यात् । पञ्चानां गवां समाहारः पञ्चगवम् ॥ **विशेषणं विशेष्येण बहुलम् २।१।१७ ॥** भेदक भेद्येन समानाधिकरणेन बहुल प्राग्वत् । नीलमुत्पल नीलोत्पलम् । बहुलग्रहणात्क्वचिन्नित्यम्—कृष्णसर्पः क्वचिन्न—रामो जामदग्न्यः॥ **उपमानानि सामान्यवचनैः २।१। ५५ ॥** घन इव श्यामो घनश्यामः । (वा.) शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् । शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ॥ **नञ् २ । २ । ६ ॥** नञ्

---

१ " तद्धितार्थोत्तरपदसमाहारे " इत्यनुवर्त्याह—**तद्धितेत्यादि** ॥ २ तद्धितार्थोत्तरपदयोः प्रयोजनाभावादाह—**समाहार इति** ॥ ३ " द्विगुरेकवचनम् " " द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् " इत्यतोऽनुवर्त्योचित्येनाह—**समाहार इति** ॥ ४ 'क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव । विधेर्विधान बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥ ' ५ " प्राक्कडारात् " " विभाषा " " तत्पुरुष. " इत्यतोऽनुवर्तन्ते । उपमानवाचकस्य पूर्वनिपातार्थं सूत्रम् ॥ ६ पूर्वपदे यद् उत्तरपदम् तस्य लोपो वक्तव्य इत्यर्थ. ॥ ७ 'शाकप्रिय ' शब्द उत्तरपदभूतस्य प्रियपदस्य लोपे 'शाकपार्थिव.' इति सिध्यति ॥ एवं पूजकशब्दलोपेन ' देवब्राह्मण. ' इति सिध्यति ॥

सुपा सह समस्यते ॥ **न लोपो नञः ६।३।७३॥** नञो नस्य लोप उत्तरपदे । न ब्राह्मणः अब्राह्मणः ॥ **तस्मान्नुडचि ६।३।७४॥** लुप्तनकारान्नञ उत्तरपदस्याजादेर्नुडागमः स्यात् । अनश्वः । नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः ॥ **कुगतिप्रादयः २।२।१८॥** एते समर्थेन नित्य समस्यन्ते । कुत्सितः पुरुषः कुपुरुषः॥ **ऊर्यादिच्विडाचश्च १।४।६१॥** ऊर्यादयश्च्व्यन्ता डाजन्ताश्च क्रियायोगे गतिसंज्ञाः स्युः । ऊरीकृत्य । शुक्लीकृत्य । पटपटाकृत्य ॥ सुपुरुषः ।(वा०) प्रादयो गताद्यर्थे प्रथमया। प्रगत आचार्यः प्राचार्यः। (वा०)अत्यादयः क्रान्ताद्यर्थे द्वितीयया । अतिक्रान्तो मालामिति विग्रहे--।

---

१ "प्राक्कडारात्" "सह सुपा" इत्यतोऽनुवर्त्याह-**सुपा सहेति**॥२ "अलुगुत्तरपदे" इत्यतोऽनुवर्त्याह-**उत्तरपद इति** ॥ ३ "अलुगुत्तरपदे" इत्यत 'उत्तरपदे' इति वर्तते तद्विशेषणत्वेन तदादिविधिः 'तद्' शब्देन "न लोपो नञ." इति परामृश्यतेऽत आह-**लुप्तनकारादिति** ॥ ४ "समर्थः पदविधि" "प्राक्कडारात्" "नित्य क्रीडाजीविकयो." इत्यतोऽनुवर्त्याह-**समर्थेनेति** ॥ ५ ऊरी उररी तन्थी ताली आताली वेताली धूली धूसी शकला संसकला ध्वसकला भ्रंसकला गुलगुधा सजूस् फलफली विक्ली आक्ली आलोष्ठी केवाली केवासी सेवासी- पर्याली शेवाली वर्षाली अत्यूमशा वश्मसा मस्मसा मसमसा श्रौषट् वौषट् वषट् स्वाहा स्वधा वन्धा प्रादुस् श्रत् आविस् । एते ऊर्यादय । ६ "प्राग्रीश्वरान्निपाता." "उपसर्गा क्रियायोगे" "गतिश्च" इत्यतोऽनुवर्त्य प्रत्ययग्रहणे तदन्तविधिं च कृत्वाह-**च्व्यन्ता इत्यादि** ॥ ७ एषु वार्तिकेषु 'समस्यन्ते' इत्यध्याहार्यम् ॥

**एकविभक्ति चापूर्वनिपाते १।२।४४ ॥** विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यान्न तु तस्य पूर्वनिपातः ॥ **गोस्त्रियोरुपसर्जनस्य १।२।४८ ॥** उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च तदन्तस्य प्रातिपदिकस्य ह्रस्वः स्यात् । अतिमालः । (वा.) अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलया—अवकोकिलः । (वा.) पर्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानोध्ययनाय पर्यध्ययनः । (वा.) निरादयः क्रान्ताद्यर्थे पञ्चम्या । निष्क्रान्तः कौशाम्ब्याः—निष्कौशाम्बिः ॥ **तत्रोपपदं सप्तमीस्थम् ३।१।९२ ॥** सप्तम्यन्ते पदे कर्मणीत्यादौ वाच्यत्वेन स्थितं यत्कुम्भादि तद्वाचकं पदमुपपदसंज्ञं स्यात् ॥ **उपपदमतिङ् २।२।१९ ॥** उपपदं सुबन्तं समर्थेन नित्यं समस्यते । अतिङन्तश्चायं समासः । कुम्भं करोतीति कुम्भकारः । अतिङ् किम्—मा भवान् भूत् । माङि लुङिति सप्तमी-

---

१ "प्रथमानिर्दिष्टं समास उपसर्जनम्" इत्यतोऽनुवर्तमानयोः 'समास उपसर्जनम्' इत्यनयोः पदयोः समासपदं सामर्थ्यात्तादर्थ्यात्ताच्छब्द्येन विग्रहपरमित्याह—विग्रह इति ॥ २ "ह्रस्वो नपुंसके प्रातिपदिकस्य" इत्यतोऽनुवर्तते । 'द्वन्द्वविशेषणं प्रत्येकमन्वेति' इत्यभिप्रेत्याह—**उपसर्जनमित्यादि** ॥ ३ कौशाम्बी नाम नगरीविशेषः ॥ ४ 'तत्र' इति तत्पदेन 'धातोः' इति अधिकारः परामृश्यते । आवृत्त्या 'तत्र' इत्यस्याप्यधिकारत्वेन 'तस्मिंश्च सत्येव' इत्यस्य प्रतिसूत्रमुत्तरत्रोपस्थितिः ॥ ५ "समर्थः पदविधिः" "सुबामन्त्रिते" "नित्यं क्रीडाजीविकयोः" इत्यतोऽनुवर्त्याह—**सुबन्तमिति** ॥

निर्देशान्माङुपपदम् । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः । व्याघ्री । अश्वक्रीती । कच्छपीत्यादि ॥ **तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ५।४।८६ ॥** संख्याव्ययादेरंगुल्यन्तस्य समासान्तोऽच् स्यात् ॥ द्वे अङ्गुली प्रमाणमस्य-द्व्यङ्गुलम् । निर्गतमंगुलिभ्यो निरंगुलम् ॥ **अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ५।४।८७॥** एभ्यो रात्रेरच् स्याच्चात्संख्याव्ययादेः । अहर्ग्रहण द्वन्द्वार्थम् ॥ **रात्राह्नाहाः पुंसि २।४।२९ ॥** एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव।अहश्च रात्रिश्चाहोरात्रः । सर्वरात्रः।संख्यातरात्रः। (संख्यापूर्वं रात्रं क्लीबम्) द्विरात्रम् । त्रिरात्रम् ॥ **राजाहःसखिभ्यष्टच् ५।४।९१॥** एतदन्तात्तत्पुरुषाट्टच् स्यात् । परमराजः ॥ **आन्महतः समाना-**

---

१ 'सुपा' इत्यभिसंबन्धेन तिङन्तेन समासाप्राप्तौ ' अतिङ् ' ग्रहणं व्यर्थ सद् बोधयति-' नात्र 'सुपा' इत्यस्य संबन्धो भवति ' इति । तथा च 'सुपा' इत्यस्यासंबन्धे तिङन्तेन प्राप्तस्य समासस्य वारणाय सार्थकमतिङ्ग्रहणमिति भावः । ' सुपा ' इत्यस्यासंबन्धात् फलितां परिभाषां दर्शयति-**गतिकारकोपपदानामिति** ॥ २ " समासान्ताः " " अच् प्रत्यन्ववपूर्वात्-" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं कृत्वाह-**अंगुल्यन्तस्येति** ॥ ३ " समासान्ताः " " तत्पुरुषस्यांगुलेः-" " अच् प्रत्यन्ववपूर्वात्-" इत्यतोऽनुवर्त्याह-**एभ्यो रात्रेरजिति॥** चसंग्राह्यमाह-**चात्संख्याव्ययादेरिति** ॥ ४ अहःपूर्वपदकरात्र्युत्तरपदकस्य तत्पुरुषस्यासंभवादाह-**द्वन्द्वार्थमिति॥** ५ "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं च कृत्वाह-**एतदन्ताविति॥** ६ "तत्पुरुषस्यांगुलेः" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिमाश्रित्याह-**एतदन्तादिति ॥**

**धिकरणजातीययोः ६।३।४६** ॥ महत आकारोऽन्तादेशः स्यात्समानाधिकरणे उत्तरपदे जातीये च परे । महाराजः । प्रकारवचने जातीयर् । महाप्रकारो महाजातीयः ॥ **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योः ६।३।४७** ॥ आत्स्यात् । द्वौ च दश च द्वादश । अष्टाविंशतिः ॥ **त्रेस्त्रयः ॥६।३।४८** ॥ त्रयोदश । त्रयोविंशतिः । त्रयस्त्रिंशत् ॥ **परवल्लिंगं द्वन्द्वतत्पुरुषयोः २।४।२६** ॥ एतयोः परपदस्येव लिङ्गं स्यात् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्धपिप्पली । (वा.) द्विगुप्राप्तापन्नालम्पूर्वगतिसमासेषु प्रतिषेधो वाच्यः । पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः ॥ **प्राप्तापन्ने च द्वितीयया २।२।४** ॥ समस्येते । अकारश्चानयोरन्तादेशः ॥ प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्यै—अलंकुमारिः । अत एव ज्ञापकात्समासः । निष्कौशाम्बिः ॥

---

१ "अलुगुत्तरपदे" इत्यतोऽनुवर्त्याह—उत्तरपद इति ॥ २ जातीयर प्रत्ययत्वेन नोत्तरपदत्वम्, तस्य पदत्वाभावात् ॥ ३ "अलुगुत्तरपदे" "आन्महत समानाधिकरण—" इत्यतोऽनुवर्त्याह—आत्स्यादिति ॥ बहुव्रीहौ तु द्वित्रा अशीतौ परे द्व्यशीतिरित्यादौ न ॥ ४ 'द्व्यधिका दश' इत्युत्तरपदलोपो वा ॥ ५ "संख्यायामबहुव्रीह्यशीत्यो." इत्यनुवर्तते । सकारान्तोऽयमादेश ॥ अशीतौ परे तु त्र्यशीतिरित्येव ॥ ६ प्रतिषेधः परवल्लिङ्गस्येति शेष. ॥ ७ "प्राक्कडारात्" इत्यतोऽनुवर्त्याह—समस्येते इति ॥ चकारात्प्रागकारोऽपि प्रश्लिष्यत इत्याह—अकारश्चेति ॥ प्रकृतिभावस्तु प्रायिक इति भावः ॥ ८ अलपूर्वसमासविधेरनुपलम्भादाह—अत एवेति ॥

**अर्धर्चाः पुंसि च २।४।३१ ॥** अर्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः । अर्धर्चः । अर्धर्चम् । एवं ध्वजतीर्थशरीरमण्डपयूपदेहाङ्कुशपात्रसूत्रादयः । सामान्ये नपुंसकम् । मृदु पचति । प्रातः कमनीयम् ॥

॥ इति तत्पुरुषः ॥ ३ ॥

## अथ बहुव्रीहिः ॥

**शेषो बहुव्रीहिः २।२।२३ ॥** अधिकारोऽयं प्राग्द्वन्द्वात् ॥ **अनेकमन्यपदार्थे ।२।२।२४ ॥** अनेकं प्रथमान्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः ॥ **सप्तमीविशेषणे बहुव्रीहौ ।२।२।३५ ॥** सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं स्यात् । अत एव ज्ञापकाद्व्यधिकरणपदो बहुव्रीहिः ॥ **हलदन्तात्सप्तम्याः संज्ञायाम् ६।३।९॥** हलन्तादन्दन्ताच्च सप्तम्या अलुक् ।

---

१ "अपंथ नपुंसकम्" इत्यतोऽनुवर्त्याह-क्लीबे चेति ॥ २ लिङ्गविशेषस्याविवक्षायां नपुंसकमेव प्रयोक्तव्यम् । 'लिङ्गसर्वनाम नपुसकम्' इति भाष्ये पाठः । तस्य सर्वेषां लिङ्गानां नाम वाचक विशेषलिङ्गावाचकमित्यर्थः ॥ ३ "शेषो बहुव्रीहि" इत्यधिकृतं शेषपदं व्याचष्टे-प्रथमान्तमिति । "प्राक्कडारात्" "विभाषा" इत्यतोऽनुवर्त्याह-वा समस्यते इति ॥ ४ "उपसर्जनं पूर्वम्" इत्यतोऽनुवर्त्याह-पूर्वं स्यादिति ॥ ५ 'कण्ठे' इत्यस्य सप्तम्यन्तत्वेनानेकप्रथमान्तत्वाभावात्समासाप्राप्तावाह-अत एव ज्ञापकादिति । अय भाव-प्रथमान्तानामेव समासे सप्तम्यन्तालाभाद् व्यर्थमेव सप्तमीग्रहणं स्यादिति ॥ ६ "अलुगुत्तरपदे" इत्यधिकारलब्धमाह-अलुगिति ॥

कण्ठेकालः । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । ऊढरथोऽनड्वान् । उपहृतपशू रुद्रः । उद्धृतौदना स्थाली । पीताम्बरो हरिः । वीरपुरुषको ग्रामः ॥ (वा.) प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः । प्रपतितपर्णः,प्रपर्णः । (वा.)नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः। अविद्यमानपुत्रः, अपुत्रः ॥ **स्त्रियाः पुंवद्भाषितपुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणीप्रियादिषु ६।३।३४ ॥** उक्तपुंस्कादनूङ् ऊङोऽभावोऽस्यामिति बहुव्रीहिः । निपातनात्पञ्चम्या अलुक् षष्ठ्याश्च लुक् । तुल्ये प्रवृत्तिनिमित्ते यदुक्तपुंस्कं तस्मात्पर ऊङोऽभावो यत्र तथाभूतस्य स्त्रीवाचकशब्दस्य पुंवाचकस्येव रूपं स्यात् समानाधिकरणे स्त्रीलिङ्गे उत्तरपदे न तु पूरण्यां प्रियादौ च परतः । गोस्त्रियोरिति ह्रस्वः । चित्रगुः । रूपवद्भार्यः । अनूङ् किम्—वामोरूभार्यः ॥ पूरण्यां तु—॥ **अप्पूरणीप्रमाण्योः ५।४। ११६ ॥** पूरणार्थप्रत्ययान्तं यत्स्त्रीलिङ्गं तदन्तात्प्रमाण्यन्ताच्च बहु-

---

१ उत्तरपदलोपार्थमेवेदं वार्तिकद्वयमिति भावः ॥ २ 'भाषितपुंस्कादनूङ्' इत्यत्र पञ्चमीश्रवणषष्ठ्यश्रवणयोः कारणमाह—निपातनादिति ॥ भाषितः पुमान् यस्मिन्नर्थे स भाषितपुंस्कः सोऽस्त्यस्य तद्भाषितपुंस्कम् इति विग्रहफलमाह—तुल्ये प्रवृत्तिनिमित्त इति ॥ ३ "चित्रा गावोऽस्य" इति विग्रहे बहुव्रीहिसमासे चित्राशब्दे पुंवद्भावेन टापो निवृत्तिः, गोशब्दस्य "गोस्त्रियोः" इति ह्रस्वेनौकारस्योकारः ॥ एवमेव रूपवद्भार्य इत्यत्र पुंवद्भावेन रूपवतीशब्दस्थस्य ङीपो निवृत्तिः भार्याशब्दवर्तिन आकारस्य ह्रस्वोऽकार इति बोध्यम् ॥ ४ "बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्—" इत्यतोऽनुवर्तमानस्य बहुव्रीहेर्विशेषणे तदन्तविधिरित्याह—तदन्तादिति ॥

व्रीहेरप्स्यात् । कल्याणी पञ्चमी यासां रात्रीणां ताः कल्याणीपञ्चमा रात्रयः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः । अप्रियादिषु किम्—कल्याणीप्रिय इत्यादि ॥ **बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ५।४।११३ ॥** स्वाङ्गवाचिसक्थ्यक्ष्यन्ताद्बहुव्रीहेः षच् स्यात् । दीर्घसक्थः । जलजाक्षी । स्वाङ्गात्किम्—दीर्घसक्थि शकटम् । स्थूलाक्षा वेणुयष्टिः । अक्ष्णोऽदर्शनादिति वक्ष्यमाणोऽच् ॥ **द्वित्रिभ्यां ष मूर्ध्नः ५।४।११५ ॥** आभ्यां मूर्ध्नः षः स्याद्बहुव्रीहौ । द्विमूर्धः । त्रिमूर्धः ॥ **अन्तर्बहिर्भ्यां च लोम्नः ५।४।११७ ॥** आभ्यां लोम्नोऽप्स्याद्बहुव्रीहौ । अन्तर्लोमः । बहिर्लोमः ॥ **पादस्य लोपोऽहस्त्यादिभ्यः ५।४।१३८ ॥** हस्त्यादिवर्जितादुपमानात्परस्य पादशब्दस्य लोपः स्याद्बहुव्रीहौ । व्याघ्रस्येव पादावस्य व्याघ्रपात् । अहस्त्यादिभ्यः किम्—हस्तिपादः । कुसूलपादः ॥ **संख्या-**

---

१ अन्यपदार्थरात्रीणां मध्यगता पञ्चमी पूरणी वाच्या चेत्युक्तोदाहरणे पुंवद्भावप्रतिषेधः समासान्तश्च भवत्येव । यत्र तु पूरणी प्रधानभूता न, तत्र 'कल्याणपञ्चमीक. पक्षः' इत्यत्र तिरोहितावयवभेदस्य पक्षस्य वाच्यत्वेन पञ्चम्या अप्रधानत्वात् पुंवद्भावप्रतिषेधः समासान्तश्च न प्रवर्तते ॥ 'पुंवद्भावप्रतिषेधः समासान्तश्च प्रधानपूरण्यामेव ' इति सिद्धान्तात् ॥ २ " बहुव्रीहौ सक्थ्यक्ष्णोः—" इत्यतोऽनुवर्त्याह—बहुव्रीहाविति ॥ ३ " बहुव्रीहौ सक्थ्यक्ष्णो.—" " अप् पूरणीप्रमाण्यो· " इत्यतोऽनुवर्त्याह—अबिति ॥ ४ " बहुव्रीहौ सक्थ्यक्ष्णो.—" " उपमानाच्च " इत्यतोऽनुवर्त्याह—उपमानादिति ॥

**सुपूर्वस्य ५।४।१४०** ॥ पादस्य लोपः[1] स्यात्समासान्तो बहुव्रीहौ । द्विपात् । सुपात् ॥ **उद्विभ्यां काकुदस्य ५।४।१४८** ॥ लोपः[2] स्यात् । उत्काकुत् । विकाकुत् ॥ **पूर्णाद्विभाषा ५।४।१४९** ॥[3] पूर्णकाकुत् । पूर्णकाकुदः ॥ **सुहृद्दुर्हृदौ मित्रामित्रयोः ५।४।१५०** ॥[4] सुदुर्भ्यां हृदयस्य हृद्भावो निपात्यते । सुहृन्मित्रम् । दुर्हृदमित्रः ॥ **उरःप्रभृतिभ्यः कप् ५।४।१५१** ॥[5] **सोऽपदादौ ८।३।३८** ॥ पाशकल्पककाम्येषु[6] विसर्गस्य सः ॥ **कस्कादिषु च ८।३।४८** ॥ एष्विण उत्तरस्य विसर्गस्य[7] षोऽन्यस्य तु सः । इति सः । व्यूढोरस्कः ॥ **इणः षः ८।३।३९** ॥ इण उत्तरस्य विसर्गस्य षः पाशकल्पककाम्येषु परेषु ॥ प्रियसर्पिष्कः ॥ **निष्ठा २।२।३६** ॥ निष्ठान्तं बहुव्रीहौ पूर्वं[8] स्यात् । युक्तयोगः ॥ **शेषाद्विभाषा ५।४।**

---

१ "पादस्य लोपः–" इत्याद्यनुवर्त्याह–पादस्येति ॥ २ "ककुदस्यावस्थायां लोपः" इत्यतोऽनुवर्त्याह–लोप इति ॥ ३ "ककुदस्यावस्थायां लोप" "उद्विभ्यां काकुदस्य" इत्यतोऽनुवर्तेते ॥ ४ 'बहुव्रीहौ' इत्यनुवर्तते ॥ ५ 'बहुव्रीहौ' इत्यनुवर्तते ॥ ६ "विसर्जनीयस्य स" इत्यतोऽनुवर्त्य 'पाशकल्पककाम्येष्विति वाच्यम्' इति वार्तिकोक्तम् अपदादिपदार्थं प्रकाशयन्नाह–पाशकल्पेति ॥ ७ "विसर्जनीयस्य स" "सोऽपदादौ" इत्यतोऽनुवर्त्याह–विसर्गस्येति ॥ ८ "उपसर्जनं पूर्वम्" "सप्तमीविशेषणे बहुव्रीहौ" इत्यतोऽनुवर्त्याह–पूर्वमिति ॥

१५४ ॥ अनुक्तसमासान्ताद्बहुव्रीहेः कब्वा । महायशस्कः महायशाः ॥

॥ इति बहुव्रीहिः ॥ ४ ॥

## अथ द्वन्द्वः ।

**चार्थे द्वन्द्वः २।२।२९ ॥** अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्वः । समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्र 'ईश्वरं गुरुं च भजस्व' इति परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः । 'भिक्षामट गां चानय' इत्यन्यतरस्यानुषङ्गिकत्वेनान्वयोऽन्वाचयः । अनयोरसामर्थ्यात्समासो न । 'धवखदिरौ छिन्धि' इति मिलितानामन्वय इतरेतरयोगः । 'सञ्ज्ञापरिभाषम्' इति समूहः

१ "बहुव्रीहौसक्थ्यक्ष्णो –" "उरःप्रभृतिभ्यः कप्" इत्यतोऽनुवर्त्य शेषशब्दार्थं प्रदर्शयन्नाह–अनुक्तसमासान्तादिति ॥ "शेषो बहुव्रीहिरनेकमन्यपदार्थे" इति सूत्रविहिताद् इत्यप्यर्थशेषो बोध्य ॥२ "अनेकमन्यपदार्थे" "सुबामन्त्रिते" "प्राक्कडारात्–" "विभाषा" इत्यतोऽनुवर्त्याह–अनेकमिति॥ ३ समुच्चयान्वाचययो परस्परम् असामर्थ्यात् सहविवक्षाया अभावेन साहित्यस्याप्रतीतेः सामर्थ्याभावात् समासो नेति भाव ॥ ४ सहविवक्षया परस्परं मिलितानामित्यर्थः ॥ इतरेतरयोगविषये साहित्य विशेषणतया भासते समाहारे तु विशेष्यतयेति भेदमस्त्वेनेतरेतरयोगे साहित्यस्याप्रधानत्वेन समस्तपदसङ्ख्याभानसत्त्वेन द्विवचनबहुवचने भवतः । समाहारे साहित्यस्य प्रधानतया भानात्तद्गतैकत्वस्य विशेष्यत्वेनैकवचनमेव न द्विवचनबहुवचन इति बोध्यम् ॥

समाहारः ॥ **राजदन्तादिषु परम् २।२।३१** ॥ एषु पूर्वप्रयोगार्हं परं स्यात् । दन्तानां राजानो राजदन्ताः । ( धर्मादिष्वनियमः ) । अर्थधर्मौ । धर्मार्थावित्यादि ॥ **द्वन्द्वे घि २।२।३२** ॥ द्वन्द्वे घिसंज्ञं पूर्वं स्यात् । हरिश्च हरश्च हरिहरौ । **अजाद्यदन्तम् २।२।३३** ॥ द्वन्द्वे पूर्वं स्यात् । ईशकृष्णौ ॥ **अल्पाच्तरम् २।२।३४** ॥ शिवकेशवौ ॥ **पिता मात्रा १।२।७०** ॥ मात्रा सहोक्तौ पिता वा शिष्यते । माता च पिता च पितरौ मातापितरौ वा ॥ **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २।४।२** ॥ एषां द्वन्द्व एकवत् । पाणिपादम् । मार्दङ्गिकवैणविकम् । रथिकाश्वारोहम् ॥ **द्वन्द्वाच्चुदषहान्तात्समाहारे ५।४।१०६** ॥ चवर्गान्ताद्दषहान्ताच्च द्वन्द्वाट्टच् स्यात्समाहारे । वाक् च त्वक् च वाक्त्वचम् । त्वक्स्रजम् । शमीदृपदम् । वाक्त्विषम् । छत्रोपानहम् । समाहारे किम्—प्रावृट्शरदौ ॥

॥ इति द्वन्द्वः ॥ ५ ॥

---

१ "उपसर्जनं पूर्वम्" इत्यतोऽनुवर्त्याह—पूर्वप्रयोगेति ॥ २ "राजदन्तास्तु चत्वारो दन्तानामुपरि स्थिताः" ॥ ३ "उपसर्जनं पूर्वम्" इत्यतोऽनुवर्त्याह—पूर्वमिति ॥ ४ "उपसर्जनं पूर्वम्" "द्वन्द्वे घि" इत्यतोऽनुवर्त्याह—द्वन्द्वे इति ॥ ५ 'द्वन्द्वे' 'पूर्वम्' इत्यनुवर्तते ॥ ६ "सरूपाणामेकशेष एकविभक्तौ" इत्यतः 'शेष' इति "नपुंसकमनपुंसकेन" इत्यतो 'ऽन्यतरस्याम्' इत्यनुवर्त्याह—वा शिष्यत इति ॥ ७ "द्विगुरेकवचनम्" इत्यतोऽन्यतरस्याम्' अनुवर्त्याह—एकवदिति ॥ समाहार एकवत्त्वस्य नियमार्थमिदम्—एकवदेवेति ॥ ८ "राजाहःसखिभ्यष्टच्" इत्यतोऽनुवर्त्याह—टच् स्यादिति ॥

## अथ समासान्ताः ।

**ऋक्पूरब्धूः पथामानक्षे ५।४।७४॥** अ अनक्षे इति च्छेदः। ऋगाद्यन्तस्य समासस्य अप्रत्ययोऽन्तावयवोऽक्षे या धूस्तदन्तस्य तु न । अर्धर्चः । विष्णुपुरम् । विमलापं सरः । राजधुरा । अक्षे तु अक्षधूः । दृढधूरक्षः । सखिपथः । रम्यपथो देशः ॥ **अक्ष्णोऽदर्शनात् ५।४।७६ ॥** अचक्षुःपर्यायादक्ष्णोऽच् स्यात्समासान्तः । गवामक्षीव गवाक्षः ॥ **उपसर्गादध्वनः ५।४।८५ ॥** प्रगतोऽध्वानं प्राध्वो रथः ॥ **न पूजनात् ५।४।६९ ॥** पूजनार्थात्परेभ्यः समासान्ता न स्युः । सुराजा । अतिराजा ॥

॥ इति समासान्ताः ॥

## अथ तद्धिताः तत्रादौ साधारणाः ॥

**समर्थानां प्रथमाद्वा ४।१।८२ ॥** इदं पदत्रयमधिक्रियते प्राग्दिश इति यावत् ॥ **अश्वपत्यादिभ्यश्च ४।१।८४॥** एभ्योऽण् स्यात्प्राग्दीव्यतीयेष्वर्थेषु । अश्वपतेरपत्यादि-आश्वपतम् । गाणपतम् ॥

---

१ " समासान्ताः " इत्यधिक्रियतेऽत आह-समासस्येति ॥ अनेनैव निर्देशेन समासान्तविधेरनित्यता ज्ञाप्यते ॥ २ "समासान्ताः " इत्यधिकारे " अच् प्रत्यन्ववपूर्वात्-" इत्यतोऽनुवर्त्याह-अच् स्यादिति ॥ ३ " अच् प्रत्यन्ववपूर्वात् " इत्यत ' अच् समासान्तः ' इत्यनुवर्तते ॥ ४ " समासान्ताः" इत्यधिक्रियतेऽत आह-समासान्ता इति ॥ ' स्वतिग्रहणमेवाभिसंधायोदाहरति-सुराजेति ॥ ५ " प्राग्दीव्यतोऽण् " इत्युक्ति मनसि निधायाह-अण् स्यादिति ॥

**दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ४।१।८५॥** दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेष्वर्थेषु ण्यः स्यात् । अणोपवादः । दितेरपत्य दैत्यः।अदितेरादित्यस्य वा ॥ **हलो यमां यमि लोपः ८।४।६४॥** इति यलोपः । आदित्यः । प्राजापत्यः । ( देवाद्यञञौ ) । दैव्यम् । दैवम् ( बहिषष्टिलोपो यञ्च ) । बाह्यः । ( ईकक्च )–**किति च ७।२।११८ ॥** किति तद्धिते चाचामादेरचो वृद्धिः स्यात् । बाहीकः । ( गोरजादिप्रसङ्गे यत् ) । गोरपत्यादि गव्यम् ॥ **उत्सादिभ्योऽञ् ४।१।८६ ॥** औत्सः ॥

इत्यपत्यादिविकारान्तार्थसाधारणाः ॥ १ ॥

---

## अथापत्याधिकारः ॥

**स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ४।१।८७ ॥** धान्यानां भवन इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमान्नञ्स्नञौ स्तः । स्त्रैणः ।

---

१ " प्राग्दीव्यतोऽण् " इति सामान्यप्राप्तस्याणोऽपवादोयम् । अस्याप्यपवादः " अश्वपत्यादिभ्यः–" इति बोध्यम् ॥ २ " झयो होऽन्यतरस्याम् " इत्यतोऽन्यतरस्याम्' इति वर्तते ॥ ३ " प्राग्दीव्यतः " इत्यधिक्रियते ॥ ४ " प्राग्दीव्यत " इत्यधिक्रियते ॥ ५ " प्राग्दीव्यतः " "बहिषष्टिलोप–" इत्यनुवर्तते ॥ ६ " मृजेर्वृद्धिः " " अचोञ्णिति " " तद्धितेष्वचामादेः" इत्यतोऽनुवर्त्याह–तद्धिते इति ॥ ७ "प्राग्दीव्यतः–" इत्यधिक्रियते ॥ ८ " प्राग्दीव्यतः–" इत्यधिक्रियते ॥ ९ वत्यर्थेन ' पुंवत् ' इति निर्देशाज्ज्ञापकात् ॥

पौंस्नः ॥ **तस्यापत्यम् ४।१।९२ ॥** षष्ठ्यन्तात्कृतसन्धेः समर्थादपत्येऽर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः ॥ **ओर्गुणः ६।४।१४६ ॥** उवर्णान्तस्य भस्य गुणस्तद्धिते । उपगोरपत्यमौपगवः । आश्वपतः । दैत्यः । औत्सः । स्त्रैणः । पौंस्नः ॥ **अपत्यं पौत्रप्रभृति गोत्रम् ४।१।१६२ ॥** अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात् ॥ **एको गोत्रे ४।१।९३ ॥** गोत्रे एक एवापत्यप्रत्ययः

---

१ "संयोगान्तस्य" इति सलोपः । मकारस्य "मोऽनुस्वारः" इत्यनुस्वारः ॥ २ "समर्थानां प्रथमाद् वा" इत्यधिकृतस्य 'प्रथमात्' इत्यस्यार्थमाह-**षष्ठ्यन्तादिति** ॥ 'समर्थानाम्' इति सामर्थ्यं चात्र परिनिष्ठितत्वम् । तच्च कृतसर्वविकार्यत्वमित्यभिप्रेत्याह-**कृतसंधेरिति** ॥ तेन सौतिथिति वैक्षमाणि इत्यादौ सवर्णदीर्घोत्तरमेव प्रत्ययः सिध्यति । अन्यथा सवर्णदीर्घात्प्राक् प्रत्यये परत्वादाङ्गत्वाच्च वृद्ध्यावायादेशे 'सावुत्थितिर्वाक्षीक्षमाणिरित्यनिष्टरूपापत्तिः स्यादिति भावः ॥ "समर्थः पदविधिः" इत्यस्योपस्थानमाह-**समर्थादिति** ॥ अस्य विधित्वे प्राचीनसूत्राणामनुवृत्तावाह-**उक्ता इति** ॥ अस्याधिकारत्वेनास्योत्तरत्रान्वयेनाह-**वक्ष्यमाणा इति** ॥ 'वा' इत्यस्य सम्बन्धादाह-**वेति** ॥ ३ "भस्य" "नस्तद्धिते" इत्यतोऽनुवर्त्य विशेषणे तदन्तविधिं च कृत्वाह-**उवर्णान्तस्येति** ॥ ४ पौत्रप्रभृतौ साक्षादपत्यत्वाभावादाह-**विवक्षितमिति** ॥ ५ पौत्रप्रभृतौ प्रतिपुरुषं प्रत्ययप्राप्तौ शततमे संताने एकोनशतं प्रत्यया आपद्येरन्नतोऽनिष्टस्यैकोनशतप्रत्ययसमूहस्य वारणायेष्टस्यैकस्यैव करणाय नियमार्थं सूत्रमित्याह-**एक एवापत्यप्रत्यय इति** ॥

स्यात्। उपगोर्गोत्रापत्यमौपगवः ॥ **गर्गादिभ्यो यञ् ४।१।१०५** ॥ गोत्रापत्ये। गर्गस्य गोत्रापत्य गार्ग्यः। वात्स्यः ॥ **यञञोश्च २।४।६४** ॥ गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयोर्लुक् स्यात्तत्कृते बहुत्वे न तु स्त्रियाम्। गर्गाः। वत्साः ॥ **जीवति तु वंश्ये युवा ४।१।१६३** ॥ वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसञ्ज्ञमेव स्यात् ॥ **गोत्राद्यून्यस्त्रियाम् ४।१।९४** ॥ यूनपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यात्, स्त्रिया तु न युवसञ्ज्ञा ॥ **यञिञोश्च ४।१।१०१** ॥ गोत्रे यौ यञिञौ तदन्तात्फक् स्यात् ॥ **आयनेयीनीयियः फढखछघां प्रत्यया-**

---

१ "गर्गादिभ्यो यञ्" इत्यत्र भाष्यसमते 'अयम्' इति च्छेदेऽकारस्यानुनासिकत्वेनेत्सञ्ज्ञाया लोप इति बोध्यम् ॥ २ "गोत्रे कुञ्जादिभ्य.–" इत्यतः 'गोत्रे' इति वर्ततेऽत आह–गोत्रापत्य इति॥ ३ अत्रापि "अयञोश्च" इत्येवच्छेदो भाष्यसमत.। तेन 'तदनुबन्धकग्रहणेनातदनुबन्धकस्य' इति परिभाषया "गर्गादिभ्यो यञ्" इति विहितस्य ञ्यनुबन्धकस्यैव ग्रहणम् न तु "देवाद्यञञौ" "द्वीपादनुसमुद्रं यञ्" इत्यादिविहितस्य "ण्यक्षत्रियार्षञितो यूनि लुगणिञो" "तद्राजस्य बहुषु तेनैवास्त्रियाम्–" "यस्कादिभ्यो गोत्रे" इत्यतोऽनुवर्त्याह–गोत्रे इति। यद्यनन्तमिति पाठो भाष्यसंमत.॥ ४ 'अपत्य पौत्रप्रभृति॥ ५ प्रत्यपत्य प्रत्ययकरणे ह्यूनानिष्टप्रत्ययपरम्परा आप्नोतीति तद्वारणाय नियमार्थं सूत्रमित्याह–गोत्रप्रत्ययान्तादेव प्रत्यय इति ॥ एवं च युवापत्यविवक्षायामपि गोत्रप्रत्यय एको भवतीत्यनुमीयते ॥ "गोत्रे ६ कुञ्जादिभ्य.–" "नडादिभ्य. फक्" इत्यतोऽनुवर्त्याह–गोत्रे याविति ॥ "अयञिञो" इत्येव पाठो भाष्यसमतः पाठः सूत्रे "अयञमोश्च" इत्येव भाष्यकृता ध्वननात् ॥

**दीनाम् ७।१।२** ॥ प्रत्ययादेः फस्य आयन्, ढस्य एय्, खस्य ईन्, छस्य ईय्, घस्य इय्, स्युः । गर्गस्य युवापत्यं-गार्ग्यायणः । दाक्षायणः ॥ **अत इञ् ४ । १ । ९५** ॥ अपत्येऽर्थे । दाक्षिः ॥ **बाह्वादिभ्यश्च ४।१।९६** ॥ बाहविः । औडुलोमिः । ( लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः ) उडुलोमाः । आकृतिगणोयम् ॥ **अनृष्यानन्तर्ये बिदादिभ्योऽञ् ४।१।१०४** ॥ एभ्योऽञ् गोत्रे । ये त्वत्रानृषयस्तेभ्योऽपत्येऽन्यत्र तु गोत्रे । बिदस्य गोत्रं बैदः । बैदौ । बिदाः । पुत्रस्यापत्यं पौत्रः । पौत्रौ । पौत्राः । एवं दौहित्रादयः ॥ **शिवादिभ्योऽण् ४।१।११२** ॥ अपत्ये । शैवः । गाङ्गः ॥ **ऋष्यन्धकवृष्णिकुरुभ्यश्च ४।१।११४** ॥ ऋषिभ्यः–वासिष्ठः।

---

१ यथासंख्यमाश्रित्याह–**फस्येत्यादि** ॥ २ "तस्यापत्यम्" इत्यनुवर्त्याह–**अपत्येऽर्थे इति** ॥ ३ "तस्यापत्यम्" इत्यनुवर्तते ॥ ४ बाह्वादीञोऽपवाद इति भावः ॥ ५ "गोत्रे कुञ्जादिभ्यः–" इत्यतोऽनुवर्त्याह–**गोत्रे इति** ॥ 'अनृषि' इति लुप्तपञ्चम्यन्तम् । आनन्तर्ये–इत्यत्र स्वार्थे ष्यञ् इत्यभिप्रेत्याह–**ये त्वत्रानृषय इति** ॥ ६ विदस्य ऋषित्वेन गोत्रेऽञ् । अतः "यञञोश्च" इति बहुत्वे लुक् ॥ ७ पुत्रस्यानृषित्वेन गोत्रेऽञोप्राप्त्याऽनन्तरापत्य एवाञो जातत्वेन न लुक् । अत एव तत्र 'गोत्रे' इत्यनुवर्तितमिति बोध्यम् ॥ ८ यद्यपि "गोत्रसञ्ज्ञासूत्रपर्यन्तं गोत्राधिकारः" इति "यूनि लुक्" इति सूत्रभाष्यतो लभ्यते । तथापि वृत्तावितो गोत्राधिकारनिवृत्तेरुक्तत्वादपत्यसामान्ये प्रत्ययमाह–**अपत्य इति** ॥ "तस्यापत्यम्" इत्यनुवर्तते इति भावः ॥ ९ "तस्यापत्यम्" "शिवादिभ्योऽण्" इत्यतः 'अण्' इत्यनुवर्तते ॥

वैश्वामित्रः । अन्धकेभ्यः-श्वाफल्कः । वृष्णिभ्यः-वासुदेवः । कुरुभ्यः-नाकुलः । साहदेवः ॥ **मातुरुत्संख्यासंभद्रपूर्वायाः ४ । १। ११५** ॥ संख्यादिपूर्वस्य मातृशब्दस्योदादेशः स्यादण् प्रत्ययश्च[1] । द्वैमातुरः । षाण्मातुरः । सांमातुरः । भाद्रमातुरः ॥ **स्त्रीभ्यो ढक ४।१।१२०** ॥ स्त्रीप्रत्ययान्तेभ्यो ढक्[2] । वैनतेयः ॥ **कन्यायाः कनीन च ४।१।११६** ॥ चादण्[3] । कानीनो व्यासः कर्णश्च ॥ **राजश्वशुराद्यत् ४।१।१३७** ॥ ( राज्ञो[4] जातावेवेति वाच्यम् ) ॥ **ये चाभावकर्मणोः ६।४।१६८** ॥ यादौ[5] तद्धिते परेऽन् प्रकृत्या स्यान्न तु भावकर्मणोः । राजन्यः । जातावेवेति किम्-**अन् ६।४। १६७** ॥ अन् प्रकृत्या[6] स्यादणि परे । राजनः । श्वशुर्यः ॥ **क्षत्राद् घः ४।१।१३८** ॥ क्षत्रियः[7] ॥ जातावित्येव । क्षात्रिरन्यत्र ॥ **रेवत्यादिभ्यष्ठक् ४।१।१४६॥ ठस्येकः ७।३।५०**॥ अङ्गात्परस्य[9]

---

१ "शिवादिभ्योऽण्" इत्यतोऽनुवर्त्याह–अण्प्रत्ययश्चेति ॥ २ "तस्यापत्यम्" इत्यधिकार ॥ ३ "तस्यापत्यम्" इत्यधिकारे "शिवादिभ्योऽण्" इत्यण् चेनानुकृष्यतेऽत आह–चादणिति ॥ ४ "तस्यापत्यम्" इत्यधिकार ॥ तत्र विशेषविवक्षा दर्शयति–राज्ञो जातावेवेति ॥ ५ "प्रकृत्यैकाच्" 'अन्' "आपत्यस्य च तद्धितेऽनाति" इत्यतोऽनुवर्त्य विशेषणे तदा[illegible]र्वि च कृत्वाह–यादाविति ॥ ६ "प्रकृत्यैकाच्" "इनण्यनपत्ये" इत्यताऽनुवर्त्याह–प्रकृत्येति ॥ ७ "तस्यापत्यम्" इत्यधिकार ॥ ८ "तस्यापत्यम्" इत्यधिकार ॥ ९ "अङ्गस्य" इत्यधिकार. पञ्चमीविपारिणतो वर्ततेऽत आह–अङ्गादिति ॥

ठस्यैकादेशः स्यात् । रैवतिकः ॥ **जनपदशब्दात्क्षत्रियादञ् ४।१।१६८॥** जनपदक्षत्रियवाचकाच्छब्दादञ् स्यादपत्ये । पाञ्चालः। ( क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ) । पञ्चालानां राजा पाञ्चालः । (पूरोरण् वक्तव्यः ) । । पौरवः । ( पाण्डोर्ड्यण् ) पाण्ड्यः ॥ **कुरुनादिभ्यो ण्यः ४।१।१७२ ॥** कौरव्यः । नैषध्यः ॥ **ते तद्राजाः ४।१।१७४ ॥** अञादयस्तद्राजसञ्ज्ञाः स्युः ॥ **तद्राजस्य बहुषु तेनैवास्त्रियाम् २।४।१ ७४॥** बहुष्वर्थेषु तद्राजस्य लुक् तदर्थकृते बहुत्वे न तु स्त्रियाम् । इक्ष्वाकवः। पञ्चालाः इत्यादि ॥ **कम्बोजाल्लुक् ४।१।१७५ ॥** अस्मात्तद्राजस्य लुक् । कम्बोजः । कम्बोजौ । (कम्बोजादिभ्य इति वक्तव्यम्) चोलः । शकः । केरलः । यवनः ॥

॥ इत्यपत्याधिकारः ॥ २ ॥

## अथ चातुरर्थिकाः ।

**तेन रक्तं रागात् ४।२।१॥** अण् स्यात् । रज्यतेनेनेति रागः।

---

१ जनपदे प्रसिद्ध शब्द एव शब्दो यस्य तस्मात् क्षत्रियादिति समासफलितमर्थमाह-**जनपदक्षत्रियवाचकादिति** ॥ २ अपत्ये ये प्रत्यया उक्तास्ते राजन्यपि भवेयुरित्यर्थः ॥ ३ अपत्ये राजनि चार्थे ॥ एवमुत्तरत्रापि ॥ ४अपत्ये राजनि च विहिताः प्रत्यया तच्छब्देन परामृश्यन्ते तदाह-**अञादय इति** ॥ ५ " ण्यक्षत्रियार्ष-" इत्यतोऽनुवर्त्याह-**लुगिति** ॥ ६ " ते तद्राजा " इत्यतोऽनुवर्त्याह-**तद्राजस्येति** ॥ ७ " प्राग्दीव्यतोऽण् " इत्यधिक्रियते । 'रागवाचकात् तृतीयान्तात् रक्तम् ' इत्यस्मिन् अर्थे 'अण्' इति सूत्रार्थः ॥

कषायेण रक्तं वस्त्रं काषायम् ॥ **नक्षत्रेण युक्तः काल ४।२।३॥** अण् स्यात् । ( तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम् ) । पुष्येण युक्त पौषमहः ॥ **लुबविशेषे४।२।४॥** पूर्वेणं विहितस्य लुप् स्यात् षष्टिदण्डात्मकस्य । कालस्यावान्तरविशेषश्चेन्न गम्यते । अद्य पुष्यः॥ **दृष्टं साम ४।२।७॥**तेनेत्येव । । वसिष्ठेन दृष्टं वासिष्ठं साम ॥ **वामदेवाड्ड्यड्ड्यौ ४।२।९ ॥** वामदेवेन दृष्टं साम वामदेव्यम् ॥ **परिवृतो रथः ४।२।१० ॥** अस्मिन्नर्थेऽण् प्रत्ययो भवति । वस्त्रेण परिवृतो वास्त्रो रथः ॥ **तत्रोद्धृतममत्रेभ्यः ४।२।१४ ॥** शरावे उद्धृतः शाराव ओदनः ॥ **संस्कृतं भक्षाः ४।२।१६ ॥** सप्तम्यन्तादण् स्यात्संस्कृतेऽर्थे यत्संस्कृत भक्षाश्चेत्ते स्युः। भ्राष्ट्रेषु संस्कृता भ्राष्ट्राः यवाः ॥ **सोऽस्य देवता ४।२।२४ ॥** इन्द्रो देवताऽस्येति

---

१ "प्राग्दीव्यतोऽण्" इत्यधिक्रियते । नक्षत्रवाचकात् तृतीयान्तात् 'युक्त' इत्यर्थेऽण् स्यात् युक्तः कालश्चेत् ॥ २ नक्षत्राणि नक्षत्रविहितानि इत्यर्थः ॥ ३ "नक्षत्रेण युक्तः कालः" 'अण्' इत्यनुवर्त्य षष्ठ्या विपरिणम्य व्याचष्टे–पूर्वेणेति ॥ ४ "तेन रक्तम्–" इत्यतोऽनुवर्त्याह–तेनेत्येवेति ॥ तृतीयान्ताद् 'दृष्टम्' इत्यर्थेऽण् दृष्टं साम चेत् । इति सूत्रार्थः ॥ ५ तृतीयान्ताद् वामदेवशब्दात् 'दृष्टम्' इत्यर्थे ड्यत् ड्यौ प्रत्ययौ भवतः दृष्टं साम चेत् ॥ इति सूत्रार्थः ॥ ६ तृतीयान्तात् 'परिवृत –' इत्यर्थेऽण् परिवृतो रथश्चेत् इति सूत्रार्थः ॥ ७ अमत्रवाचकात् सप्तम्यन्ताद् 'उद्धृतम्' इत्यर्थेऽण् स्यादिति सूत्रार्थं ॥ ८ "प्राग्दीव्यतोऽण्" इत्यधिक्रियते "तत्रोद्धृतम्–" इत्यतः 'तत्र' इति वर्तते ॥ ९ "प्राग्दीव्यतोऽण्" इत्यधिक्रियते ॥ प्रथमान्ताद् 'देवताऽस्य' इत्यर्थेऽणादयः ॥

ऐन्द्रं हविः । पाशुपतम्[1] । बार्हस्पत्यम् ॥ **शुक्राद्घन् ४।२।१६ ॥**[2] शुक्रियम् ॥ **सोमाट्ट्यण् ४।२।३० ॥**[3] सौम्यम् ॥ **वाय्वृतुपितृषसो यत् ४।२।३१ ॥**[4] वायव्यम् । ऋतव्यम् ॥ **रीङ्ऋतः ७।४।२७ ॥** अकृद्यकारे[5] असार्वधातुके यकारे च्वौ च परे ऋदन्ताङ्गस्य रीङादेशः । यस्येति च । पित्र्यम् । उषस्यम् ॥ **पितृव्यमातुलमातामहपितामहाः ४।२।३६ ॥** एते निपात्यन्ते । पितुर्भ्राता पितृव्यः । मातुर्भ्राता मातुलः । मातुः पिता मातामहः । पितुः पिता पितामहः ॥ **तस्य समूहः ४।२।३७ ॥**[6] काकानां समूहः काकम् ॥ **भिक्षादिभ्योऽण् ४।२।३८ ॥**[7] भिक्षाणां समूहो भैक्षम्[8] । गर्भिणीनां समूहो गार्भिणम् । इह ( भस्याऽढे तद्धिते )[9] इति पुंवद्भावे कृते-

---

१ पाशुपतमिति । "अश्वपत्यादिभ्यश्च" इत्यण् । बार्हस्पत्यमिति । पत्युत्तरपदलक्षणो ण्यः ॥ २ "साऽस्य देवता" इत्यधिक्रियते । प्रथमान्तात् शुक्रशब्दात् 'देवताऽस्य' इत्यर्थे घन् प्रत्ययः स्यात् ॥ ३ 'प्रथमान्तात्' सोमशब्दात् 'देवताऽस्य' इत्यर्थे ट्यण् प्रत्ययः स्यात् ॥ ४ 'प्रथमान्तेभ्यो वाय्वृतुपितृषसशब्देभ्य. 'देवताऽस्य' इत्यर्थे यत् प्रत्यय' ॥ ५ "अयङ् यि क्ङिति" "अकृत्सार्वधातुकयो'-" "च्वौ च" इत्यतोऽनुवर्त्याह-अकृद्यकारे इति ॥ ६ षष्ठ्यन्तात् 'समूह.' इत्यर्थेऽण् स्यादिति सूत्रार्थः ॥ ७ षष्ठ्यन्तभिक्षादिभ्य 'समूह' इत्यर्थेऽण् । इति सूत्रार्थ. ॥ ८ "अचित्तहस्ति-" इति प्राप्तस्य ठको बाधनायायमण्विधीयते ॥ ९ "स्त्रीभ्यो ढक्" इति ढभिन्ने तद्धिते परतो भस्य पुंवत्, इति वार्तिकार्थ ॥ पुंस्यपि गर्भसम्बन्धस्य वेदे निरूपितत्वेन भवत्येव गर्भिणीशब्दस्य भाषितपुंस्कत्वम् ॥

